(२२०) क्षत्रियादेस्तु राजैव गृह्णीयात् ।

ब्राह्मणधनवर्जं हि राजगामि[1] दर्शितम् ।

(२२१) तेन ब्रह्मस्वं[2] कथमपि राज्ञा न ग्रहीतव्यमित्यर्थः ।

(२२२) तद्दणं प्रार्थनाकाले प्रार्थितोपि ऋणी यत्र न ददातितत्र धनिकेन यत्कर्त्तव्यं

तदाह[3] मनुः—

**यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।**

**तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम् ॥**

**धर्म्मेण व्यवहारेण छलेनाचरितेन च ।**

**प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥**

पूर्वसामर्थ्याभावादुत्तरोत्तरम्[4] ।

(२२३) **धर्म्मे बृहस्पतिः—**

**सुहृत्सम्बन्धि[5]सन्निष्टैः सामोक्त्यानुगमेन च ।**

**प्रायेण वा ऋणी दाप्यो धर्म्म एष उदाहृतः ॥**

(२२४) प्रायः प्रायोपवेशनम् ।

**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्योयथोदयम् ।**

(२२५) **व्यवहारे तु कात्यायनः—**

**धार्य्योऽवरुद्धस्त्वृणिकः[6] प्रकाशं जनसंसदि ।**

**यावन्न दद्याद्यच्च देशाचारस्थितिर्यथा ॥**

(२२६) **छला[7]चरितबलेषु बृहस्पतिः—**

**छद्मना याचयित्वार्थमानीय ऋणिकाद्धनी ।**

**अर्थाहितादि[8] वा हृत्य दाप्यते यत्र सोपधिः ॥**

उपधिश्छद्म ।

---

१ छ—गामीति । २ छ—तेन ब्रह्मस्वं राज्ञापि न ग्रहीतव्यम् । ३ घ—तत्राहमनुः । ४ ख+छ+ग—भावेनात्तरोत्तरम् । च—पूर्वपूर्वसाम । ५ क+ग—सकृत्सं । ६ क+च+धार्य्योऽवरुद्धऋणिकः । ७ छ—छद्माचरित । ८ ख+छ—अन्वाहितादिवाहृत्य ।

(२२७) तथा—

दारपुत्रपशून्[१] रुद्ध्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णी दाप्यते स्वर्णं तदाचरितमुच्यते ॥

(२२८) रुद्ध्वा[३] स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः प्रकीर्त्तितः ॥

(२२९) प्रथमं प्रार्थनैव सर्वत्र युक्ता ।

कात्यायनः—

राजानं स्वामिनं विप्रं शान्त्वेनैव प्रसाधयेत् ।
ऋक्‌थिनं सुहृदं वापि छलेनैव प्रसाधयेत् ॥

ऋक्थिनं दायादम् ।

(२३०) तथा—

वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य दापयेत् ॥

(२३१) यत्र धारणेऽपि[४] धनन्नलभ्यते

तत्राह बृहस्पतिः—

निर्द्धनं ऋणिकं कर्म्म गृहमानीय कारयेत् ।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः ॥

(२३२) याज्ञवल्क्यः—

हीनजातिं परिक्षीणमृणार्थं कर्म्म कारयेत् ।
ब्राह्मणस्तुपरिक्षीणः शनैर्दाप्योयथोदयम् ॥

(२३३) प्रथमत[५] एव बलात्कारे दण्डमाह

कात्यायनः—

यदि[६]श्यादौ बलादिष्टमनारंभं कर्म्म कारयेत् ।

१ क—प्रायोपवेशनम् । २ ग + च—दाप्यतेऽर्थस्वंतदा । ३ ख + छ + च—बद्धास्वगृहमानीय । ४ ग—धारणेनापि । ५ क प्रथम एव । ६ छ—यदिवादावनादिष्ट । ख + ग—यदिवादौबलादिष्ट ।

प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत चर्णिकः ॥

(२३४) यद्यादावृणिकं गर्हितङ्कर्म्म ऋणनिर्य्यातनाय धनिकः कारयेत् तदा स पूर्वसाहसं-दण्ड्यः ऋणिकश्चऋणान्मुच्येतेत्यर्थः ।

(२३५) नारदः—

अथ शक्तिविहीनःस्यादृणीकालविपर्य्ययात् ।

शक्त्यपेक्ष्यमृणन्दाप्यः काले काले यथोदयम् ॥

(२३६) अथ परमवृद्धिप्राप्तंधनमृणिको दातुन्न शक्नोति तदा चक्रवृद्ध्या स्वेच्छया धारयेत् ।

(२३७) तथा च बृहस्पतिः—

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।

कारयेद्वाऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥

(२३८) पतितवृद्धेर्मूलेन सह मूलीकृताया द्विगुणाधिकं भोगलाभेपि ग्राह्यमित्याह

स एव—

द्विगुणस्योपरि यथा चक्रवृद्धिः प्रगृह्यते ।

भोगलाभस्तथा तत्र मूलंस्यात्सोदयं ऋणम् ॥

(२३९) ऋणाभावेस एव—

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।

द्रव्यन्तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥

रक्षेद्वाकृतमूल्यन्तु दशाहं जनसंसदि ।

ऋणानुरूपं परतोगृह्णीतान्यत्तु वर्जयेत् ॥

स्वधनञ्च स्थिरीकृत्य गणनाकुशलैर्नरैः ।

तद्धनं ज्ञातिविदितं प्रगृह्णन्नापराध्नुयात् ॥

(२४०) उत्तमर्णश्च वलादिनापि स्वधनं प्रगृह्णन्न राज्ञा शास्यः ।

---

१ ख+ग—पूर्वं । छ+ च—सपूर्वसाहसंदण्डंदाप्यः । २ छ—प्राप्तमृणं । ३ क—तत्र । ४ च—परमवृद्धमूलेन । ५ छ—भूताया । ६ छ—मूल्यं । ७ ग—हिरण्यंद्विगुणीभूतं । ८—ज्ञात् ।

(१४१) तथा च विष्णुः—

प्रयुक्तमर्थं[1] यथाकथञ्चित्साधयन्न राज्ञा वाच्यः[2] स्यात् ।

(२४२) यथाकथञ्चिद्यथाविषयं प्रवर्त्तितेन धर्म्मादिनेत्यर्थः ।

(२४३) याज्ञवल्क्यः—

प्रतिपन्नं साधयानो न वाच्यो[3] नृपतेर्भवेत् ।

साध्यमानो[4] नृपं गच्छन् दण्ड्योदाप्यश्च तद्धनम् ॥

(२४४) प्रतिपन्नोऽङ्गीकृतर्णः । यस्तु[5] विप्रतिपन्नो न्यायवादी स नासेध्यः ।

(२४५) तथा च बृहस्पतिः—

नासेद्धव्यः क्रियावादी सन्दिग्धेऽर्थेकथञ्चन ।

आसेधयंस्तु[6] नासेध्यं दण्ड्योभवति धर्म्मतः ॥

(२४६) प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम्[7] ।

एवं यत्रर्णिकोब्रूते क्रियावादी स उच्यते ॥

(२४७) रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।

अदेयदेययोर्वापि सन्दिग्धार्थः स कीर्त्तितः ॥

(२४८) मनुः—

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ।

तौ नृपेण ह्यधर्म्मज्ञौ दाप्यौ[8] तद्द्विगुणं दमम् ॥

(२४९) दण्ड्यस्यातिधनत्व इदं द्रष्टव्यम् ।

(२५०) तथा—

ऋणे देये प्रज्ञाते पञ्चकं शतमर्हति ।

---

१ छ—साधयमानो राज्ञा न वाच्यः स्यात् । २ च—वाच्यः = ग—शास्य ः। ३ छ—वार्यौ = क + ख—वाच्यो । ४ छ—माने । ५ क—यस्तु । ६ छ—स्वासेधयं = च—आसेधयंस्तुना । ७ छ—तद्भवाम्यह । ८ ख—दाप्यंतद्द्विगुणं = ग—दाप्येते ।

अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥

(२५१) आदो विमते पश्चादनुमते शते पञ्चकं पश्चादपि विमते प्रमिते शते दशकं[1] विमतोराज्ञा दण्डयः। दण्डयस्याल्पधनत्व इदम।

(२५२) याज्ञवल्क्यः—

निह्नवे भावितं दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगो[2] द्विगुणमभियोगाद्धनं हरेत् ॥

(२५३) कारणे विधिरेष स्याज्जितस्यैकतरस्य तु।
प्राङ्न्यायवादे च तथा जितस्यैकतरस्य तु ॥

(२५४) मध्यविधधनस्य मिथ्याकारणप्रत्यङ्न्याये[3]ष्विदम्।

(२५५) यमः—

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा स दापनीयः स्याद्गृहीत्वा द्विगुणन्ततः ॥

(२५६) विष्णुः—

उत्तमर्णश्चेद्राजानमियात्[4]तद्विभावितोऽधमर्णो राज्ञे धनदशमभागं दण्डं[5] दद्यात्। प्राप्तार्थ[6]श्चोत्तमर्णो विंशतितम[7]मंशम्।

(२५७) कात्यायनः—

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत्।
तत्तदेवाग्रतोदेयं राज्ञः श्रोत्रियतोन[8] च ॥

(२५८) एकाहे लिखितं यत्र तत्र कुर्य्यादृणं समम्[9]।
ग्रहणं लक्षणं[10] लाभमन्यथा तु यथाक्रमम् ॥

---

१ छ + च—दशकं राज्ञा दण्डयः घ—दण्डयाः। २ छ—मिथ्याभियोगं। ३ ग—प्राङ्न्याये = च—मिथ्याकारणेप्राङ्न्यायंत्विदम् — छ—मिथ्याकारणप्राङ्न्यायवादेत्विदम्। ४ ग—तदा। ५ ख + च—भागं दत्वा दण्डं दद्यात क + घ—दशमभागं दद्यात्। ६ख + ग—प्राप्तोयश्चोत्तमर्णो। ७ छ— विंशतितमम्। ८ छ + च — पिवा — छ ऽनुच। ९ छ— कुर्याद्यावद्दणंसमम्। १०ख + ग— रक्षणं।

(२५९) यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

(२६०) अन्यद्रव्याभावे तस्यैव कृते तद्देयमित्यर्थः ।

(२६१) याज्ञवल्क्यः—
दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै चान्यच्च कारयेत् ।
साक्षिमच्च भवेद्यद्वा दातव्यं तत्ससाक्षिकम् ॥

---

## अथ निक्षेपः ॥२॥

(१) तत्र नारदः—
स्वं द्रव्यं यत्र विश्रम्भान्निक्षिपत्यविशङ्कितः ।
निःक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

(२) मनुः—
कुलजे वृत्तिसम्पन्ने धर्म्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्याढ्ये निक्षेपं निक्षिपेद्बुधः ॥
महापक्षो बहुबन्धुः ।

(३) याज्ञवल्क्यः—
वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

(४) नारदः—
स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।

---

१ च—शुद्धौ । २ च—यत्र । ३ ग—वित्तसम्पन्ने । ४ ग+छ—धनिन्यार्ये ।
५ च—महापक्षो महाबन्धुः ।

प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

विपर्यये[1] प्रत्ययं दद्यात् ।

(५) बृहस्पतिः—

भर्तृद्रोहे यथा नार्याः पुंसः[2] पुत्रसुहृद्वधे ।

दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते[3] नृणाम् ॥

(६) न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।

गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥

(७) निक्षेप्तुरेव दद्यात्तत्सत्वे ।

तथाच

बृहस्पतिः—

स्थापितं येन विधिना येन यच्च यथाविधि ।

तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे[4] ॥

प्रत्यनन्तरे[5] पुत्रादौ—

(८) मनुः—

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे[6] ।

न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

(९) नारदः—

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः ।

दैवराजकृते तद्वन्न चेत्तज्जैह्म्यकारितम्[7][8] ॥

(१०) निक्षेप्तुरेव[9] नष्ट इत्यर्थः । दैवराजकृतेप्येवं[10] ग्रहीतृकौटिल्यात्तु कृते[11] देयमेव ग्रहीत्रा तेन ग्रहीत्रपराधो[12] दाने हेतुरिति तत्त्वम् ।

---

१ ख । ग नाशे च—विपर्यये दिव्यं दद्यात । २ च—पुंसां । ३ च—भक्षितेऽपह्नुते । ४ ग—प्रत्यन्तरे । ५ ग—प्रत्ययन्तरे । ६ ग—प्रत्ययन्तरे । ७ ख—तजूक्ष्यकारितम् । ८ ग—कारितः । ९ छ—एवेत्यर्थः । १० च—एवं राजकृतेऽपि । ११ क—हृते । १२ ग + छ- तदपराधस्त्वदाने जैह्म्यमजैह्म्यञ्चहेतुरितितत्वम् ।

(११) मनोरप्येतत् परता—

चौरैर्हृतं जलेनाढ़मग्निना दग्धमेव च।

न दद्याद्यदि तस्मात् स न संहरति किञ्चन।

(१२) किञ्चित्संहृत्य गृहीत्वा शेषमन्यत्र निःक्षिपति उपेक्षते वा सर्वं मम न देयं भवत्विति तत्सर्वं देयमेव ॥

(१३) तथाच कात्यायनः—

ग्राहकस्य तु यद्दोषान्नष्टं तद्ग्राहकस्य तु।

देयमिति शेषः।

(१४) तथा—

यस्य दोषेण यत्किञ्चि [illegible] हियेत वा।

तद्द्रव्यं सोदयं दाप्यो दैवराजकृतं विना ॥

(१५) राजकृतेऽपि च तद्दोषात्कृते दद्यादेवेत्युक्तम्।

(१६) याचितकं प्रकृत्य कात्यायनः—

प्राप्ते काले कृते कार्ये न दद्याद्याचितोऽपि सन्।

तस्मिन्नष्टे हृते वाथ ग्रहीता मूल्यमाहरेत् ॥

(१७) अयमर्थः। यत्कार्य्यमुद्दिश्य यद्याचितं तस्मिन्कार्य्ये कृते काले वा पूर्णे याचितोपि स्वामिना ग्रहीता यदि न ददाति तदा दैवराजादिनष्टमपि ग्रहीता मूल्यादिद्वारेण दद्यादेव।

(१८) नारदोऽपि—

एष एव विधिर्दृष्टो याचितान्वाहितादिषु।

शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

---

१ ख + ग + छ—कृताद्गिना। २ ङ + च—अधिकृत्य। ३ छ—कृते। ४ क—मावहेत ५ ङ + च—स्वामिना स। ६ छ—तदा तदैव।

(१९) न्यासमपह्नुवानः स्वकीयं द्रव्यं[1] तस्मिन्निक्षिप्य प्रार्थ्य प्राप्याचौरत्वेना[2] प्राप्य चौरत्वेन निर्णयः। एवं याचितादावपीति। अत्र प्रकरणे वाक्यमिदं रत्नाकरे लिखितम्।

(२०) बृहस्पतिः—

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत्।
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं[3] भवेत्॥

२१ स्वद्रव्यमेव पृथक्कृत्य रक्षति न निःक्षेप्तुस्तत्रापि[4] दद्यादेवेत्यर्थः। तथा यत्र प्रार्थितो[5] न दत्तवान् कालान्तरे च राज्ञा गृह्यते तत्रापि दद्यादेवेत्यर्थः[6]।

(२२) तथाच नारदः—

याच्यमानस्तु[7] यो दातुर्निक्षेपं[8] न प्रयच्छति।
दण्ड्यः स राज्ञो भवति नष्टे[9] दाप्यस्तु तत्समम्।
यत्रार्थं[10] साधयेत्तेन निःक्षेप्तुरननुज्ञया।
तत्रापि दण्ड्यः स भवेत्तच्चसोदयमाहरेत्[11][12]॥

व्यासः—

(२३) भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम्।
किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम्॥

(२४) मनुः—

उपधाभिश्च यः कश्चित् परद्रव्यं हरेन्नरः।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः[13]॥

---

१ च—द्रव्यंनिक्षिप्य। २ च चौरत्वेन प्राचीने न्यासे विचारकेण; छ—प्राचीनेपि न्यासे विचारकेण। ३ च—दाप्यं ४ च; ख—न निक्षिप्तं। ग—ननिक्षिप्तं प्रयच्छति। ५ च—प्रार्थितोऽपि न दत्तवान् कालान्तरे राजा गृह्णाति। क—कालान्तरं वा गृह्णाति। छ—कालान्तरे च राज्ञा गृह्यते ६ छ—दद्यादेव। ७ ख+ग—याच्यमानन्तु। ८ ख+च+छ—निक्षिप्तं। ९ च—नष्टो। १० ग—यथार्थं। ११ क—वहेत् १२ ग—स दाप्यः। १३ छ—बुधैः।

(२५) उपधा छलम् सहायो हरणसहकारी। वध[1]: ताड़नबन्धनादि:। अन्यत्राप्येवं[2] जातीयके अयमेव विषय[3]:।

(२६) तथाच बृहस्पतिः—

अन्वाहिते याचितके शिल्पिन्यासे तथैव च।
एष एवोदितो धर्म्मस्तथैव शरणागते[4]॥

(२७) शिल्पिन्यासे अलङ्करणादिघटनार्थम्[5] शिल्पिसमर्पिते[6] सुवर्णादौ उपधाभिरेषां ग्रहणे[7] उक्तैव शास्तिः[8]।

(२८) यैस्तु संक्रियते न्यासो दिवसैः परिनिष्ठितैः।
तदूर्द्ध्वं स्थापयञ्छिल्पी[9] दाप्यो दैवहतेपि तत्[10]॥

(२९) घटनावधिदिनातिक्रमे[11] शिल्पिदेयता न तु तदभ्यन्तर[12] इत्यर्थः।

(३०) मनुः—

यो निःक्षेपन्नार्पयति यश्चानिक्षिप्य याचते।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम्[13]॥

(३१) अत्रैव[14] श्लोके द्विगुणं दममिति मत्स्यपुराणपाठः। स च[15] दमः सधननिकृष्टाचारविषयः। मनुवचनन्तु निर्द्धनसाचारविषयम्।

(३२) कात्यायनः—

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्।
अज्ञाननाशितञ्चैव[16] येन दाप्यः स एव तत्॥

(३३) एव कारेण तदपरा[17]नन्तर्गततत्पुत्रादिव्यवच्छेदः।

---

१ ख—हननं। २ छ—जातीयेष्वेवमेव विधिः। ३ ख+छ+ग+च—विधिः। ४ च—नाशमागते। ५ छ—अलंकारघटनार्थं। ६ ख+ग+च शिल्पिषु समर्पिते। ७ ख+ग+च+छ—हरणे। ८ च—शान्तिः। ९ छ—छापयञ्छिल्पी—। १० छ—दैवहतं तु तत्। ११ छ—क्रमेतु—। १२ ख+छ—न तदभ्यन्तर। १३ छ—तावत्समं दमम्। १४ छ—तत्रैव—। १५ ग—सच छगमः सच। १६ ग+च+छ। नाशितञ्चापि १७ त्वदपरा।

(३४) तथाच नाध्याभवेयुरित्यधिकारे

गोतमः ।

निध्यन्वाहितयाचितावक्रीतादयो नष्टाः सर्वाननिन्दितान् पुरुषापराधेन ।

(३५) निधिर्निक्षेपः अन्वाहितमन्वाधिः अवक्रीतं भाटकेनानीतं सर्वान् पुत्रादीन् निरपराधान् ।

(३६) उपनिधौ कात्यायनः----

क्रयः प्रोषितनिःक्षेपो बन्धोन्वाहितयाचितम् ।
वैश्यवृत्यर्पितं चैव सोऽर्थे उपनिधिः स्मृतः ॥

(३७) क्रयः क्रीतं द्रव्यं विक्रेतुर्हस्ते कथञ्चित्स्थितम् । स्वामिनि गते देशान्तरमपरेण निःक्षेपः प्रोषितनिःक्षेपः । वैश्यवृत्यर्पितं लाभार्थमर्पितमित्यर्थः । अन्वाहितं प्रतिबन्धकमित्यर्थः ।

एतेषु सर्वेषु रक्षणप्रत्यर्पणपरीक्षण दण्डादि न्यासवत् ।

---

## अथास्वामिविक्रयः ॥३॥

(१) तत्र नारदः—

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः ॥

(२) कात्यायनः—

अस्वामिविक्रयं दानमाधिं च विनिवर्त्तयेत् ।

(३) मनुः----

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः ।

---

१ क--अर्था । २ र्थस्तूप । ३ ख×घ+च—क्रयोविक्रीतद्रव्यम् । ४ च—लाभाय समर्पित । ५ च + छ- सर्वेष्वेवरक्षण । ६ छ - च - दण्डदानादि ७ छ—नारदः । ८ ख। ग—परस्यार्थं ।

न तन्नयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम् ॥
अवहार्य्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम् ॥

(४) साक्ष्यं प्रामाण्यम् । अवहार्य्यो दाप्यः । सान्वयः प्रकृतधनस्वामिवंश्यः । निरन्वयस्तद्वंश्यः । अनपसरस्तद्धननिर्गमहेतुप्रतिग्रहादिरहितः । षट्शतं पणान्दण्ड्यः ।

(५) तथा----

अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वन्तु चौरवद्दण्डमर्हति ॥

(६) अज्ञातपरस्वविक्रयी षट्शतदमेन ज्ञाततद्विक्रयी चौरवद्दण्डेन हस्तच्छेदादिना शास्यः ।

(७) यदा यस्य हस्ते द्रव्यं तमपरो गृह्णाति । मदीयं देहीति साधुश्चासौ तदा तेन किं कर्तव्यमित्यत्र बृहस्पतिः—

पूर्वस्वामी तु तद्द्रव्यं यदागत्य विचारयेत् ।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

मूलं यस्मात्तेन तद्द्रव्यं लब्धम् ।

(८) कात्यायनः—

प्रकाशं वा क्रयं कुर्य्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालस्तु देयो योजनसंख्यया ॥
यदा मूलमुपन्यस्य पुनर्वादी वदेत्क्रयम् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

(९) क्रयशुद्धिरपि तत एव भविष्यति, तेन मूलाभाव एव क्रयशुद्धिरन्वेषणीया प्रकाशं क्रयं प्रकाशयेदित्यर्थः ।

---

१ च---प्रकृतस्वामिवंश्यः । २ ख+ग--- पणान्दाप्यः । ३—अज्ञानाज्ञानपूर्वन्तु । ४ छ—षट्शतपणदमेन । च - षट्शतेन विदितविक्रयी । ५ ध—तदपरो । ६ च+छ—तमपरोवदति । ७ ग—मिति । ८ ख+छ—स्वामीति । ९ ख+ग+च—विभावयेत् । १० छ—मूलं यस्मात्तु द्रव्यम् । ११ च—मूलमेवादौ ।

(१०) मूल आनीते व्यासः—

मूले समाहिते[1] क्रेता नाभियोज्यः[2] कथञ्चन ।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत् ॥

नाष्टिको नष्टधनः[3] ।

(११) बृहस्पतिः—

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेतृराज्ञोर्मूलदमौ[4] प्रदद्यात्स्वामिने धनम् ॥

असाधुक्रये तु क्रेतुरपि दण्डः ।

(१२) तदाह नारदः—

अस्वाम्यनुमताद्दासादसतश्चजनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

अस्वामिविक्रेतृसमदोषभाक्[5] ।

(१३) मूलगूहनेपि[6] क्रेतातद्वदित्याह नारदः—

न गूहेदागमं क्रेता शुद्धिरस्य तदागमात् ।
विपर्यये तुल्यदोषः सर्वं तद्दण्डमर्हति ॥

विपर्यये मूलगूहने[7] ।

(१४) नारदः—

अनुपस्थापय-[illegible]लं क्रयं चापरिशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

१ ख + ग + च— समाहृते । २ ख — नातियोज्यः । ३ ख + ग + छ—नष्टधनस्वामी । ४ च—क्रेतूराज्ञोर्मूल्यदमैः ख + छ क्रेतूराज्ञोधनदमौ । ५ च—तद्दोषभाक् अस्वामिविक्रेतृ ख—विक्रेतुः समदोष । ६ ग + छ—मूलनिगूहने । च—मूलग्रहणेऽपि । ७—क + ग—निगूहने च = मूलाग्रहणेनारदः ।

(१५) मनुः—

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।

अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

(१६) यत्र क्रय प्रकाशः कृतः नाष्टिकश्च तत्र[1] स्वत्वं साधयति । मूलञ्च देशान्तरादिगमनेनाशक्यहरणं[2] तत्र क्रेता राज्ञा न दण्ड्यः नाष्टिकाय तद्धनं दाप्यः ।

(१७) तथा च कात्यायनः—

नाष्टिकस्तु[3] प्रकुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।

अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनी[4] ॥

(१८) प्रकाशक्रेत्रा मूलेऽज्ञानवासस्थानत्वादानेतुमशक्ते[5]

बृहस्पतिः—

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।

समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।

अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥

स्वामी दत्वार्द्धमूल्यन्तु प्रगृह्णीयात्[6]स्वकं धनम् ॥

(१९) स्वामी विभावितस्वस्वत्वो नाष्टिकः ।

(२०) अर्द्धं[7] द्वयोरपहृतं तत्र स्याद्व्यवहारतः ।

(२१) तथा—

अविज्ञातक्रयो[8]दोषस्तथाचापरिपालनम् ।

एतद्द्वयं समाख्यातं [illegible]करं बुधैः ॥

(२२) यत्र तु नाष्टिको न स्वत्वं साधयति तत्रप्रकाशक्रेतुरेव[9] तद्द्रव्यम् नाष्टिकस्यैव दण्डः[10] ।

---

१ च– तत्स्वत्वं २ क । छ । ग—नाशक्याहरणं । ३ छ—नाष्टिकस्तत्रकुर्वीत । ४ ग—धनम् । ५ क– मशङ्किते । ६ ख । छ । ग । च—प्रगृह्णीत । ७ ख । ग—अर्द्धंद्वयोरपि कृतम् । ८ च– अविज्ञातक्रये । ९ च—क्रेतुरेव द्रव्यम् । १० ख तद्दण्डः ।

(२३) तथा च कात्यायनः—

यदि स्वं[1] नैव कुरुते नाष्टिकोज्ञातृभिद्धनम् ।
प्रसङ्गविनिवृत्यर्थं चौरवद्दण्डमर्हति ॥

स्वामितो[2] विक्रयः कश्चिद्विरुद्धो भवति ।

(२४) यदाह बृहस्पतिः—

येन क्रीतन्तु[3] मूल्येन प्रागध्यक्षनिवेदितम् ।
न तत्र विद्यते दोषःस्तेनः स्यादुपधिक्रये ॥

(२५) अन्तर्गृहे वहिर्ग्रामान्[4] निश्युपांश्वसतोजनात् ।
हीनमूल्यन्तु यत्क्रीतं ज्ञयोऽसावुपधिक्रयः[5] ॥

अत्राप्यस्वामिविक्रयवद्व्यवहारः ।

(२६) तथा च विष्णुः—

यद्यप्रकाशं हीनमूल्यमुपांशु क्रोणीयात्तदा
क्रेता चौरवच्छास्यः ।

(२७) याज्ञवल्क्यः—

हृतं प्रणष्टं यो[6] द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः सतु षण्णवति पणान् ॥

राजग्राह्य[7]खण्डनाद्दण्ड्यः ।

१ च स्वकम् । २ स्वामितोऽपिक्रयः । ३ च क्रीतस्तु । ४ च बहिर्ग्रामम् ।
५ घ—ज्ञेयोसावुपविक्रयः । ६ ग यद्द्रव्यं । ७ छ—ग्राह्यकरखण्डनाद्दण्ड्यः ।

# अथ सम्भूय समुत्थानम् ॥४॥

(१) तत्र याज्ञवल्क्यः—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथा द्रव्यं यथा वा समुदाहृतम् ॥

(२) अव्यवस्थायां मूलधनानुसारेण वृद्धिक्षयौ व्यवस्थायां तु व्यवस्थानुसारेणैव तावित्यर्थः ।

(३) बृहस्पतिः—

क्षयोहानिर्यदा तत्र राजदैवकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

क्षयो मूलस्य हानिर्लाभस्य ।

(४) तस्यापवादमाह स एव—

अनिर्दिष्टो वार्य्यमाणः प्रमादाद्यस्तु नाशयेत्
तेनैव तद्भवेद् देयं सर्व्वेषां समवायिनाम् ॥

अनिर्दिष्टोऽननुज्ञातः ।

(५) तथा—

दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशन्दशमन्दत्वा गृह्णीयुस्तेंऽशतोऽपरम् ॥

(६) नारदः—

दैवतस्करराजाग्न्यव्यसने समुपस्थिते ।
स्वशक्त्या रक्षयेद्यस्तु तस्यांशोदशमः स्मृतः ॥

(७) कात्यायनः—

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमोदेयः सर्व्वद्रव्येष्वयं विधिः ॥

---

१ च + छ—संविदाकृतौ । २ घ + च—कृताद्भवेत् । ३ च—कृताद्यस्तु ।

(८) एकस्वामिकेष्वपीयं व्यवस्थेतिकेचित् तन्न सम्भूय समुत्थानप्रकरणाम्नानात् एवमेव रत्नाकरादयोपीति। तैश्च परस्परमवञ्चयद्भिः प्रवर्त्तितव्यम्।

(९) तथा च व्यासः—

समक्षमसमक्षंवा वञ्चयन्तः परस्परम्।
नानापण्यानुसारेण प्रकुर्य्युः क्रयविक्रयौ॥

(१०) बृहस्पतिः—

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः॥

(११) शपथैरिति प्रमाणोपलक्षणं साक्षिणोऽपि क्वेत्रादेः सम्भवात्।

(१२) तस्य क्षतिमप्याह याज्ञवल्क्यः—

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।

(१३) जिह्मं मूलन्दत्वा निःसारयेयुः अजिह्म एव यो द्रव्यरक्षणे इतर व्यापारे चाशक्तः स इतरं पुरुषं शक्तं नियुञ्जीतेत्यर्थः।

(१४) रक्षाशक्तस्य तस्य मरणे

नारदः—

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात्।
अन्योवासति दायादे शक्तश्चेत्सर्वं एव वा॥

(१५) शक्तस्य मरणे तद्दायादोभाण्डमवेक्ष्य तद्दशममंशन्तदभावेऽन्यस्तद्रक्षिता तदभावे सर्वे वणिजो भाण्डं रक्षित्वा सम्भूय दशमांशं गृह्णीयुरित्यर्थः।

(१६) कृत्स्नभाण्डस्वामिमरणे

नारदः—

कश्चिच्चेत्संसरन्देशात् प्रेयादभ्यागतो वणिक्।

---

१ च—कात्यायनः। २ च—परिशोध्यः। ३ ख सर्ववादोपलक्षणम्। ४ छ—अनेन विधिराख्यात ऋत्विक्कर्षकर्मिणाम् जिह्मं मूलं दत्वा। ५ च पुरुषं नियुञ्जीत। ६ च+छ—रक्षणशक्तस्य। ७ च भाण्डंरक्षित्वा। ८ ग+घ+च+छ दशमांशं। ९ च—सर्व एव वणिजो।

राजास्य भाण्डं तद्रक्षेद्यावद्दायाददर्शनम् ॥

(१७) तथा च बृहस्पतिः—

यदा तत्र वणिक् कश्चित् प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तै राजपूरुषैः ॥

गज्ञ इतिशेषः ।

(१८) यदा कश्चित्समागच्छेत्तदा ऋक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥
दायादेऽसति बन्धुभ्यो ज्ञातिभ्योऽथ तदर्पयेत् ।
तदभावे सुगुप्तन्तद्रक्षयेद्दशवत्सरान् ॥
राजाददीत षड्भागं नवमं द्वादशन्तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद्गृह्णीत विंशकम् ॥
त्र्यब्दादूर्द्ध्वं तु नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणं श्रयेत् ॥

(१९) बौधायनः—

अब्राह्मणस्य प्रणष्टस्वामिकमृक्थं संवत्सरं परिपाल्य राजा हरेत् ।

कालविकल्पस्त्वागमनदेशापेक्षया, अचिराच्चिरेण वागमनसंभावनायां

(२०) नारदः—

अस्वामिकमदायादं दशवर्षस्थितन्ततः ।
राजा तदात्मसात्कुर्य्यादेवं धर्म्मो न हीयते ॥

---

१ ख— राज्ञ इतिशेषः । २ च तत्र । ३ ख + च + छ नारदः दायादेसति बन्धुभ्यो । ४ छ - एतच्चैकविषयमिति कश्चित् बृहस्पतिः राजाददीतषड् । ५ ग + क + च—नवमंद्- शमंतथा । ६ ग + च— क्षत्रविट्शूद्रजातीनां । ७ ग + च + छ अद्वादूर्द्ध्वं । ८ ख + ग + च + छ —देशाद्यपेक्षया ।

ऋत्विजां व्यसने चैवमन्यस्तत्कर्म्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात्सम्प्रकल्पितम् ॥

व्यसने असामर्थ्ये ।

(२१) सामान्येनैवाह बृहस्पतिः—

एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्य्या सर्व्वैर्वा सहकारिभिः ॥

(२२) याज्ञवल्क्यः—

जिह्मं त्यजेयुर्न्निर्ल्लोभमशक्तोऽन्येन कारयेत् ।
अनेन विधिनाख्यात ऋत्विक्कर्तृककर्म्मणाम् ॥

सम्भूय समुत्थानमार्गेणेत्यर्थः ।

(२३) मनुः—

ऋत्विग्यदि वृतो यज्ञे स्वकर्म्म परिहापयेत् ।
तस्य कर्म्मानुरूपेण देयोंशः सह कर्तृभिः ॥

(२४) व्याध्यादिना स्वकर्म्म त्यजत ऋत्विजस्तत्कृतार्त्विक्कर्म्मानुसारेण क्रतुदक्षिणा भागोदेय इत्यर्थः ।

(२५) तथा—

दक्षिणासु च दत्तासु स्वकर्म्म परिहापयन् ।
कृत्स्नमेव लभेतांशमन्येनैव तु कारयेत् ॥

(२६) माध्याह्निकसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु सतीषु कर्म्म व्याध्यादिना त्यजन् कृत्स्नमेव क्रतुदक्षिणांशं लभते कर्म्मशेषन्तु पुत्रादिना कारयेदित्यर्थः ।

---

१ च—एकक्रिया । २ ख तदा । ३ च छ विधिराख्यात ऋत्विक्कर्षक कर्मिणाम् । ४ ख + छ क्रतुभागानुसारेण । ५ ख सर्वासु च—दक्षिणासुत्वदत्तासु । ६ ग + च + छ— दक्षिणाभागं लभते ।

(२७) तथा—

**सर्व्वेषामर्द्धिनोमुख्या द्वितीयास्तु तदर्द्धिनः ।**
**तृतीयिनस्तृतीयास्तु चतुर्थाश्चैकपादिनः ॥**

(२८) **ज्योतिष्टोमे शतेन दीक्षयतीति श्रूयते** तेन तत्र शतं गावोदक्षिणा विहिता तत्र कस्य कीदृग्भाग इत्याकांक्षायां मुख्या होत्रध्वर्य्युब्रह्मोद्गातारः सर्वासाङ्गवामर्द्धिनः द्विन्यूनार्द्धभाजोऽग्रिमभागानुरोधात्तेन तेभ्यश्चतुर्भ्योऽष्टाचत्वारिंशद्गावः, द्वितीया मैत्रावरुणप्रतिप्रस्थातृच्छंसिप्रस्तोतारः ते प्रथमभागार्द्धिनः तेन तेभ्यश्चतुर्विंशतिर्गावः, तृतीयाअच्छावाकनेष्ट्रग्नीध्र प्रतिहोतारस्ते तृतीयिनः प्रथमांशतृतीयभागभाजस्तेन तेभ्यश्चतुर्भ्यः षोड़शगावः, चतुर्था भावस्तदुन्नेतृपोतृसुब्रह्मण्यास्ते पादिनः प्रथमांशचतुर्थभागभाजस्तेन तेभ्यश्चतुर्भ्योद्वादशगावो देया इति ।

(२९) एते चत्वारोवर्गा **अध्वर्य्युर्गृहपतिमित्यादौश्रुतौ सुव्यक्ताः ।**

(३०) तथा—

**यस्य कर्म्मणि यास्तुस्युरुक्ताः प्रत्यङ्गदक्षिणाः ।**
**स एव ता आददीत भजेरन्सर्व एव वा ॥**

(३१) अङ्गमङ्गम्प्रति ऋत्विग्विशेषसम्बन्धेन या दक्षिणाः कथिताः **यथा अभिषेचनीयौ हिरण्मयौ प्रकाशावध्वर्य्यवे ददाती त्याद्याः**

ताः किं, यन्नाम्ना आम्नातास्तेनैवग्राह्या ततः सद्वारमात्रं सर्वैरेव ग्राह्या इतिसंशयः ।

(३२) **अत्र निर्णयार्थमाह स एव**

---

१ ग- श्चैवपादिनः । २ छ—कीदृगंश । ३ ख घ च छ प्रति प्रस्तोतृ ब्राह्मणाच्छंसि प्रस्तोतारः । ग मैत्रावरुण प्रस्तोतृ ब्राह्मणाच्छंसिप्रस्तोतारः । ४ च—तेन तेभ्यश्चतुर्भ्यश्चतुर्विं । ५ च तृतीयिनश्चाच्छावाकनेष्ट्रग्निध्रप्रतिहोतारस्ते तृतीयिनः । छ नेष्ट्रग्निप्रतिहर्त्तारः । । ६ च तेभ्यः षोड़शगावस्तृतीयांशाश्च । ७ ग - चतुर्थास्तावस्तोतृनेतृपोतृ च । छ--चतुर्थांग्रावस्तदुन्नेतृपोतृसुब्रह्मण्या । ८ च अध्वर्य्युर्गृहपतिरि । ९ ख अंशमंशंप्रति । १० ग छ उतसद्वार ।

रथं हरेदथाध्वर्य्युर्ब्रह्माधाने च वाजिनम् ।
होता चापि[1] हरेदश्वमुद्गाता चाप्यनः क्रये ॥

(३३) केषांचिच्छाखिनामाधाने अध्वर्य्यूरथं, ब्रह्मा सवेगमश्वं, होता अश्वं, सोमक्रये उद्गाता अनःसकटं, हरेदित्यर्थः तथाच यस्यैव यदाम्नातं स[2] एव तद्धरेन्नान्योऽपीति तात्पर्य्यम् ।

(३४) शङ्ख लिखितौ—
अथ ऋत्विजि वृत्ते पश्चादन्यं वृणुयात् पूर्ववृत्तस्यैव दक्षिणा पश्चाद्वृत्तः किञ्चिल्लभेत । प्रवसेच्चेत्तत्कालं निमित्तं वा अपेक्ष्य यक्ष्यमाणस्तत्कालमुदीक्षेत नान्तरा यजेत, स्यादात्ययिको[3] वा तं क्रतुं समापयेत् । प्रोष्य प्रत्यागतश्च किञ्चिल्लभेत ।

(३५) अथ चेत्प्रतिषिद्धः प्रवसेत् कामादनुप्राप्ते सवने ऋत्विक् शतं दण्ड्यः स एव[4] वा दुष्टस्तस्य ऋत्विक् कुलोपाध्यायः । एवं व्याधितपतितोन्मत्तप्रहीण[5]प्रध्वस्तेषु संप्रसादकरणमृत्विक्षु कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद्द्विशतं दण्डम् । याज्यश्चैव तदेवाप्नुयात्[6] त्यागे ऋत्विजोऽपतितञ्च । कामं पतितमश्रोत्रियं त्यजेद्याज्यं चाभिशस्तमदातारम् ।

(३६) अस्यार्थः—अथेति ऋत्विजां मध्ये एकस्मिन् वृते अपगते अन्यं वृणुयात् दक्षिणा तु पूर्वकस्यैव उत्तरस्तु कर्म्मानुरूपं किञ्चिल्लभेतेत्यर्थः[7] प्रवसेच्चेदिति[8] कश्चिद्धि[9] कार्य्यवशात् प्रवसेद् यजमानस्तावन्तं कालमपेक्षेत स्वात्ययशङ्कायान्तु[10] यजमान ऋत्विगन्तरेण[11] क्रतुं समापयेत् तस्यैव दक्षिणा प्रोषि[12]तागताय किञ्चिद्दद्यादित्यर्थः । अथचेदिति यजमानेन निवारितोपि चेत्

---

१ क—चापि । २ छ—स एव ताश्चाददीत । ३ च— कोऽपि । ४ च—सएववादुष्ट ऋत्विक् कुलोपाध्यायस्तदुपनायकः । ५ छ—हीन । ६ च—तदावाप्नुयात् त्यागे । ७ घ—किञ्चिद्दद्यादित्यर्थः । ८ ग + च—प्रवसेदिति । ९ घ + च—कश्चिदृत्विक्कार्य । १० च—अत्ययशङ्कायांतु । ११ छ—सं क्रतुं । १२ क—प्रोषिताय ।

स्वेच्छयैव ऋत्विक् प्रवसेत्तदा शतं पणान् दण्ड्य इत्यर्थः स एवेति ऋत्विक् सदोषश्चेत्तदा तमुपनयन् गुरुः शतं दण्ड्य इत्यर्थः । (५७) एवमिति कथाधितादौ प्रमादादृते पश्चात् ज्ञाते तान् प्रमाद्य परितोष्यानुज्ञाप्य ऋत्विगन्तरं वृणुयादित्यर्थः कामादिति सद्याज्यत्यागे ऋत्विजः सदृत्विक् त्यागे याज्यस्य च पणशतद्वयं दण्डः सदोपस्य तु त्यागे न दोष इत्यर्थः ।

(३८) मनुः—

ऋत्विजं यस्त्यजेद्याज्यो याज्यश्चर्त्विक् त्यजेद् यदि ।
शक्तं कर्म्मण्यदुष्टश्च तयोर्दण्डः शतं शतम् ॥

(३९) एतच्च पूर्वोक्तं द्विशतं सकामत्वे सधनत्वे वा ज्ञेयम्

(४०) नारदः—

ऋत्विक् च त्रिविधो ज्ञेयः पूर्वैर्जुष्टः स्वयं कृतः ।
यदृच्छया च यः कुर्य्यादार्त्विज्यं प्रीतिपूर्वकम् ॥
ऋत्विग् याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टश्चार्त्विजं याज्यो विनेयौ तावुभावपि ॥
क्रमागतेष्वयं धर्म्मो वृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिके तु संयोज्ये त्यागे नास्त्येव किल्विषः ॥

संयोज्ये ऋत्विजि ।

(४१) बृहस्पतिः—

देशस्थित्या [illegible] गृहीतव्यं तथैव च ।
समवेतस्य यद्दत्तं प्रार्थनीयस्तथैव तत् ॥

---

१ छ—पणानां । २ घ । घ । छ—अत्याज्यत्यागे । ३ च—ऋत्विक् त्यागे । ४ छ—याज्य त्यजेद् । ५ ग—द्वयोर्दण्डः -छ—दण्डं । ६ च—पूर्वोक्तद्विशतं सकामत्वेव सधनत्वेव वा ज्ञेयम् । ७ च—यदृच्छयापि । छ—यदृच्छया तु यः कुर्यात ।

न याचते च यः कश्चिल्लाभात्स परिहीयते ।
प्रयोगः पूर्वमाख्यातः समासेनादितोऽधुना ॥
श्रूयतां कर्षकादीनां विधानमिदमुच्यते ।
वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ॥
ये समानास्तु तैः सार्द्धं कृषिष्कार्य्या विजानता ।
वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ॥
तैनैव सा प्रदातव्या सर्वेषां क्षेत्रकारिणाम् ।

यस्य विसामग्र्या क्षेत्रं पतति तत्क्षतिस्तेनैव सोढव्या ।

(४२) तथा—

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्म्मणाम् ।
संस्कर्त्ता तु कलाभिज्ञः शिल्पी चोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्म्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥

निर्वेशा वृत्तिः ।

(४३) तत्रैव विशेषमाह कात्यायनः—

शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

ज्ञानोत्कर्षात् ।

(४४) बृहस्पतिः—

हर्म्यन्देवगृहं वापि धार्म्मिकोपस्कराणि च ।

१ ख—सर्व । २ ख—कृत कार्यादीनाम् । ३ छ—विवादपद । ४ ग । छ । च—कृषि जीविनाम् । ५ च—अत्रज्ञानिर्यस्य विसामग्या यत्क्षेत्रं । ६ च—फलाभिज्ञः ७ ख । ग । छ—स्मृतिः । ८ ग । छ । च— अत्रैव । ९ च—शिल्पकाभिज्ञ । १० च—नाहरेयुर्यथोत्तरम् । ११ छ—वापी ।

सम्भूय ...वताञ्चैषां प्रमुख्योऽध्यंशमर्हति ॥
नर्त्तकानामेष धर्म्मो धर्म्मविद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिनः ॥[1]

अर्द्धमधिकं यत्र तदध्यर्द्धमंशं तालज्ञो लभत इत्यर्थः ।

(४५) स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम्[2] ।
राज्ञे दत्वा तु षड्भागं लभन्ते ते यथांशतः ॥
चतुरोंशांस्तनोमुख्याः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेदध्यंशं शेषास्त्वन्ये समांशिनः ॥

मुख्यो बुद्धिशरीरव्यापारवान्, शूरः साहसिकः समर्थोऽत्रातिबलः[3] ।

(४६) कात्यायनः—

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन्यथाविधि ॥

(४७) यत्र राज्ञो रक्षणादिव्यापारस्तत्र षड्भागः ।

अत्यन्त स्वामिव्यवधाने यत्र न तद्व्यापारस्तत्र दशमांशः ।

(४८) तथा—

तेषाञ्चेत्प्र...तानान्तु ग्रहणं यः समाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्य्या समा क्रिया ॥

तत्त्यागाय धनं सर्वैस्समं विभज्य दातव्यम् ।

(४९) तथा—

वणिजां कर्षकाणाञ्च चौराणां शिल्पिनान्तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥

---

१ ग । च । छ—तदध्यर्धं तेन सार्धमंशं । २ ङ—परस्वन्तु समाहृतम् । ३ छ—समर्थोऽतिबलः ।

# अथ दत्ताप्रदानिकम् ॥५॥

(१) तत्र नारदः—

दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकन्नाम तद्विवादपदं स्मृतम् ॥

अदेयमथ देयञ्च दत्तञ्चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥

तत्र ह्यष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं षोड़शात्मकम् ॥

(२) असम्यक्त्वञ्च दानस्य अदेयद्रव्यदानाद्वा अयथादानाद्वा सम्प्रदानभ्रान्त्या दिना वा पित्राद्यसम्मत्या वा दातुरेवहि वृद्धाद्यवस्थाभेदाद्वा ।

तत्रादेयानि ।

(३) तत्र बृहस्पतिः—

सामान्यपुत्रदाराऽऽधि सर्वस्वन्यासयाचितम् ।
प्रतिश्रुतं तथान्यस्य न देयं त्वष्टधा स्मृतम् ॥

(४) सामान्यमनेकस्वाकिम अत्र सामान्यपुत्रदारेषुचास्वातन्त्र्याद्दानासिद्धिः अस्वातन्त्र्यञ्च सामान्ये न्यायात पुत्रभार्ययोर्भिमनयोर्वचनबलात् सर्वस्वे सान्वयस्य प्रतिश्रुतं सर्वस्यैव वचनबलादेव । आधिन्यासयाचितेषु स्वत्वा-भावात् पुत्रदारसर्वस्वप्रतिश्रुतेषु चतुर्ष्वपि स्वातन्त्र्ये सत्यपि वचनबला-देव बाध इति । स्मृतिसारमते तु सर्वस्वे दानं सिद्धत्येव स्वतन्त्रस्वामि-कृतत्वात् किन्तु दातुः प्रत्यवायो निषिद्धाचरणादिति ।

१ छ—यत । २ ग—मर्हति । ३ छ—दत्तमत्रा । ४ ख । ग + छ—दातुरेवाति । ५ छ—सामान्यपुत्रदारादि । ६ ग + च—तत्र । ७ छ—सामान्यन्यायात् पुत्रभार्ययो । ८ च—दारेष्वस्वातन्त्र्या दाना । ९ घ—सामान्यन्यायात् । १० छ—पुत्रदारादि । ११ ख + ग + घ + छ—दानबाध । १२ ग—सर्वस्वदानम् ।

(६) नारदः—

अन्वाहितं याचितकमाधिः साधारणञ्च यत् ।
निःक्षेपः पुत्रदारञ्च सर्वस्वञ्चान्वये सति ॥
आपत्स्वपिहि कष्टासु वर्त्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

पुत्रस्य दाराणाञ्च समासेनोपादानादेकपदार्थतया एकत्वाद्दष्टत्वम् आपत्कालेऽपि[1] पुत्रदाराद्यन्वयानां विमतौ पुत्रदारसर्वस्वानामदेयतेत्यर्थः ।

(७) तत्सम्मतौ देयनामाह

कात्यायनः—

विक्रयञ्चैव दानञ्च न नेयास्युरनिच्छवः ।
दाराः पुत्रास्तु सर्वस्वमात्मन्येव तु योजयेत् ॥
आपत्काले तु कर्त्तव्यन्दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः ॥

(८) एतेषां[2] त्रयाणां विमनावेतत्त्रयं स्वयमेवोपभोक्तव्यं तेषामनुमतौ पुनस्तेषान्दा[3]-नमित्यर्थः । सर्वस्वमन्वयानुमतावपि[4] न देयं तत्सत्वमात्र एव दाननिषेधा-दितित्वन्ये ।

(९) पुत्रानुमतावेव वशिष्ठः

शुक्रशोणितसम्भवः पुरुषोमातापितृनिमित्तकस्तस्य-प्रदानविक्रयपरित्यगेषु[5] मातापितरौ प्रभवतः ।

(१०) अत्रापि विशेष एकस्मिन्पुत्रे इत्याह स एव नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा सहि सन्तानाय पूर्वेषां, न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः एकःपुत्रः स्वदानेसम्मतोऽपि[6] न देयः सहीत्यादिहेतुमन्निगदस्वरसात् ।

---

१ ख—आपत्कालेऽपि । २ ग । छ—तेषां । ३ छ—पुनस्तेषां । ४ छ—सर्वस्वमनुमता ।
५ छ—तस्यदान । ६ छ—स्वदानेऽनुमतोपि ।

(११) भर्त्तु[६]रनुज्ञानेऽपि स्त्रिया न ग्रहणाधिकारः। तदङ्गव्याहृतिहोमबाधादिति वर्त्तु[६]लार्थः।

(१२) **नन्वन्यत्रानुज्ञानाद्भर्त्तु**रित्यविशेषेण श्रवणाद्भर्त्तु[६]रनुज्ञायां दान[१]वद्ग्रहणेऽपि स्त्र्यधिकारसिद्धौ तदङ्गविद्या[२]प्रयुक्तिरपि तस्याः [३]कल्प्येतेति चेत् सत्यम् सहत्वेन तस्या अधिकार इष्टि[४]वन्न तु [५]पृथक्त्वेन बाधसापेक्ष विध्यापत्तेः।

(१३) **देयमाह बृहस्पतिः—**

**कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते।**
**मध्वास्वादो विषं पश्चाद्दातुर्द्धर्म्मोऽन्यथाभवेत्॥**

(१४) [६]**कात्यायनः—**

**सर्वस्वं गृहवर्ज्जन्तु कुटुम्बभरणाधिकम्।**
**यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा॥**

(१५) यदतिरिच्यते स्वकं स्वकीयमपि[७] तद्देयम्। अनतिरिक्तदाने पापम्। अतिरिक्ते तु पुण्यम्।

(१६) **अत्र "दातुर्द्धर्म्मोऽन्यथाभवेत्"** इति विहिताकरणाद्धर्म्म[८] सिद्धिरेव परन्न भवतीति न किन्तु प्रतिषिद्धाचरणादधर्म्मोऽपि।

(१७) दानसिद्धिस्तु स्वे भवत्येव दृष्टस्य स्वत्वस्य क्लृप्तकारणस्य सत्वात्। तेन तन्नाच्छेत्तुं शक्यत इत्यस्वरस एव दा[९]नासिद्धिः। **एवंस्थाव पोते** स्मृतिसारः। संमत्यपेक्षा तु मध्य[१०]क एव नामध्यके।

---

१ छ—दानग्रहणेपि। २ प्रवृत्तिप्रसक्तिरिति। ३ छ—कल्प्येत इतिसत्यम्। ४ छ—इष्टिस्तु पृथक्त्वेन। ५ ख—पार्थक्येन। ६ छ—याज्ञवल्क्यः—स्वकुटुम्बाविरोधेन देयं दारसुताहते। नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्। कात्यायनः— ७ छ—स्वकीयं तद्देयम्। ८ छ—धर्मसिद्धिर्नभवतीतिन। ९ छ—इत्यस्व एव दानानिष्पत्तिः। १० च + छ—मध्यग एव नामध्यगे।

(१८) तथा च बृहस्पतिः—[1]

सप्तागमात् गृहक्षेत्राद्यद्यत्[2] क्षेत्रं प्रदीयते।

पित्र्यंवाथ[3][4] स्वयं प्राप्तं तद्दातव्यं विवक्षितम्॥

स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम्।

वैवाहिके क्रमायाते सर्वदानन्न विद्यते॥

सप्तागमः सप्तविध आगमः।

सच—

(१९) सप्तवित्तागमा धर्म्या दायो लाभः क्रयोजयः।

प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च॥

(२०) इतिमनूक्तः। अत्र दायोऽन्वयागतं लाभःनिध्यादेः क्रयः प्रसिद्धः जयः संग्रामे, प्रयोगः कुसीदं, कर्म्मयोगः कृषिवाणिज्यादिः उपलक्षणञ्चैतत् कथमपि स्वीभूतमसाधारणं[5] स्वमात्रेच्छयाऽन्यसाधारणं[6] तदनुमतं तद्देय[7]-मिति।

क्रमायागतं[8] स्थावरमप्यविभक्तं तदुक्तम्।

(२१) सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्भवेत्।

स्त्रीज्ञातिस्वाम्यनुज्ञातं[9] दत्तं सिद्धिमवाप्नुयात्॥

(२२) सौदायिकं[10] कन्याभोग्यतया यद्विवाहे[11] लब्धं तत्रैव पत्या दीयमाने पत्न्यनुमत्यपेक्षा न्यायसहत्वात्। न तु स्वभोग्यतयापि प्राप्ते परिधानीयादौ स्मृतेरदृष्टार्थतापत्तेः[12] न्यायमूला हि व्यवहारस्मृतयः न तु श्रुतिमूला असम्भवन्मूलान्तरत्वस्य तत्रोपाधित्वात्।

(२३) अतएव—

केवलं शास्त्रमाश्रित्य न कर्तव्योविनिर्णयः।[13]

युक्तिहीनविचारैस्तु[14] धर्म्महानिः प्रजायते॥

---

१ ख—तथा चाह बृहस्पतिः। २ छ—सप्तागमाद् बृहत्क्षेत्रात्। ३ छ—स्वंस्वं। ४ छ—वाथं। ५ छ—स्वीकृत। ६ ग—अन्यसाधारणंतु। ७ ख + ग + च—सद्देयम्। ८ ग + छ—क्रमायातं। ९ ग + च + छ—स्वाम्यनुमतं। १० च—सौदायिकं भोग्यतया विवाहेयल्लब्धं। ११ छ—विवाहे-षल्लब्धं। १२ छ—दृष्टार्थत्वापत्तेः। १३ छ न कार्यो धर्मनिर्णयः। १४ छ—विचारे तु।

(२४) इति बृहस्पतिः[1]। एवं क्रमायातेऽप्यविभक्ते स्थावरे जङ्गमे वा भाग्यन्तरानुमत्यपेक्षा। एवं शौर्य्यप्राप्तेऽपि रणजिते शत्रोर्व्व्राहनादौ स्वस्वाम्यनुमत्यपेक्षा तस्यैव स्वामिगामित्वाभिधानात्। न तु वस्त्रादावपि, तस्य जेतृपुरुषगामित्वाभिधानात्। भङ्गिना राज्ञा स्वपुरुषेषु समर्प्पितेऽश्वादौ[2] राजान्तरसेनया जिते जेत्रा च दीयमाने[3] भङ्गिराजसम्मत्यपेक्षेत्यर्थ इतित्वन्ये।

(२५) बन्धाधारेणेति. बन्धकं यथास्वसम्बन्धि तथापरस्यापि कार्य्यम्, तेनायमर्थः इदं[4] वस्तु मयि बन्धकितमस्ति[5] मया त्वयि दीयते त्वयापि बन्धकाङ्क्षगृहीत्वैतत्स्वामिने[6] देयमिति[7]।

(२६) एवम्—

**विभक्ता अविभक्ता वा दायादाः स्थावरे समाः।**
**एको ह्यनीशः सर्वत्र दानाधमनविक्रये॥**

(२७) इति विभक्तानामपि यत्रांशपरिच्छेदो न जातस्तन्मध्यग एव[8] तिष्ठति तेन तत्र साधारणत्वमेव तत्रैकोऽनीशः। पृथग्भूतेषु[9] तत्सर्वेष्वेव द्रव्येषु स्वतन्त्रकृतस्य सिद्धिरेव।

(२८) अन्ये तु दायादपदं पुत्र एव मुख्यमिति पितुरुपस्थितौ विभक्तस्यापि पुत्रस्य स्थावरेऽनीशत्वं तेन प्रतिग्रहादिसम्प्रागमलब्धमेव तेन देयमित्याहुः।

स्वतन्त्रस्वामिदत्तश्च नोच्छेद्यम्

(२९) तत्रैव[10] हारीतः—

**प्रतिश्रुतार्थादानेन[11] दत्तस्योच्छेदनेन च।**
**विविधान्नरकान्याति तिर्य्यग्योनौ च जायते॥**

---

१ छ—बृहस्पतिरित्यन्ये। २ छ—समर्पितेष्वादौ। ३ च—जीयमाने। ४ छ—इदं वस्तु। ५ ग+च+छ—बन्धकमस्ति। ६ च+छ—स्वामिनि देयमित्यर्थः। ७ ग—मित्यर्थः। ८ ग+छ—मेव। ९ च+छ—पृथग्भूतेषु सर्वेषु द्रव्येषु। १० ग—तदैव हारीतः ११ ग+च—प्रतिश्रताप्रदानेन।

वाच्य। यत्र प्रतिज्ञातं कर्मणा नोपपादितम्।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च॥

(३०) कात्यायनः—

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्यादृणवद्दाप्यः प्राप्नुयात्सर्वसाहसम्॥

(३१) मत्स्यपुराणे—

प्रतिश्रुताप्रदातारं सुवर्णं दमयेन्नृपः।

(३२) अस्यापवादमाह गौतमः—

प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्।
अधर्म इहासम्प्रदानत्वप्रयोजकोऽभिमतः॥

## अथ दत्तम्।

(१) तत्र बृहस्पतिः—

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे।
श्रद्धानुग्रहसम्प्रीत्या दत्तमष्टविधंस्मृतम्॥

(२) भृतिर्वेतनम्। तुष्ट्या नटादिषु दत्तम्। पण्यमूल्यं विक्रेतरि दत्तम्। स्त्रीशुल्कं विवाहशुल्कं कन्याप्रदे दत्तम्। उपकारिणा प्रत्युपकारत्वेन दत्तम्। श्रद्धया सत्पात्रेभ्यो दत्तम्। अनुग्रहेण पुत्रादिभ्यो दत्तम्। सम्प्रीत्या मित्रेषु दत्तम्। प्रीतिदानस्य पूर्वत्रैवान्तर्भावं मत्वा सप्तत्वम्॥

---

१ च—यच्च। २ च—धनन्तद्दणसंयुक्तं। ३ ख+ग+च+छ—पूर्वं। ४ ग+च+छ—दण्डयेन्नृपः। ५ छ—अधर्मयुक्ताय। ६ च—सम्प्रदानत्वरहितः। ७ क—गुणम्। ८ ग+छ—उपकारिणे। ९ छ—मित्रादिषु।

## अथादत्तम् ।

(१) तत्र नारदः—

अदत्तन्तु भयक्रोधकामशोकरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ।
बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितैः[1] ।
कर्त्ता ममायं कर्म्मेति प्रतिलाभेच्छया च यत्[2] ॥

(२) अत्र रुगन्ताः[3]पञ्च प्रकृतिस्थितिविरोधिनो द्रष्टव्याः । उत्कोचः[4] कात्यायनेन वक्ष्यते । परीहासः उपहासः । व्यत्यासो भ्रमः । स च देयस्य सम्प्रदानस्य वा । छलं प्रमादादि । बालोऽत्र कृत्याकृत्या[5]विवेचकः[6] । मूढो जड़ः । अस्वतन्त्रः पुत्रदासादिः । आर्त्तोऽस्वस्थता[7] । मत्तो मद्येन । उन्मत्तो वातेन । अपवर्ज्जितो[8] बहिष्कृतः । प्रतिलाभेच्छया सोपाधिदत्तमुपाध्यसिद्धौ ।

(३) कात्यायनः—

कामक्रोधास्वतन्त्रार्त्तक्लीवोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहासाच्च[9] यद्दत्तं तत्पुनर्हरेत् ॥
यदि कार्य्यप्रसिद्ध्यर्थमुत्कोचास्यात्प्रतिश्रुता ।
तस्मिन्नप्यप्रसिद्धेऽर्थे[10] न देया स्यात्कथञ्चन ॥
अथ प्रागेव दत्तास्यात्प्रतिदाप्यः स तां बलात् ।
दण्डञ्चैकादशगुणं प्राहुर्गार्गीयमानवाः[11] ॥

१ घ—वर्जितः । २ छ—इच्छयापि यत् । ३ छ—रुगन्वितान्ताः । ४ च—उत्कोचश्च । ५ ग—कृत्याकृत्य विवेक रहितः । ६ छ—विवेचकः । ७ छ— अस्वस्थता । ८ च + छ—ज्ञातिभिर्बहिष्कृतः । ९ च + छ—परिहासाभ्याम् । १० च—तस्मिन्नर्थेऽप्रसिद्धे तु । ११ च + छ—गालवाः ।

(४) अत्रार्त्तेन धर्मार्थं यद्दत्तं तद्दत्तमेव।

स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः॥
इतिकात्यायनवचनात्।

अथ स्वयं निवर्त्तयत्वेनोक्तमुत्कोचां-

(५) परिभाषते कात्यायनः—

स्तेनसाहसिकोद्वृत्तपारदारिकसंशनात्।
दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्त्तनात्॥
प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते।
न तत्र दाता दण्ड्यः स्यान्मध्यस्थस्तत्र दोषभाक्॥

(६) स्तेनाद्यनुसन्धात्रा स्तेनादिदर्शनार्थं यद्धनं दर्शयित्रे दत्तं यच्च साक्ष्यादीन सत्याभिधाने प्रवर्त्तयित्रे दत्तं तदुत्कोचाख्यं कर्म सिद्धावपि निवर्त्त्यं मध्यस्थो य उत्कोचां गृह्णातीत्यर्थः। कामक्रोधदत्तम् ऋणादानस्थल एवोक्तम्।

(६) बृहस्पतिः—

क्रुद्धहृष्टभीतार्त्तबालोन्मत्तभयातुरैः।
मत्तातिवृद्धनिर्धूतैः प्रमूढैः शोकरोगिभिः॥
नर्मदत्तं तथैभिर्यत्तददत्तं प्रकीर्त्तितम्।

---

१ =च + छ—छस्थेना। २ ख—यद्दत्तं। ३ क—निवर्त्तत्वेन। ४ ग—स्तेय। ५ ग—पारजायिक। ६ ख—तल्य। ७ छ—यत्र। ८ च—क्रुद्धंक्रुष्टप्रम। ९ ग + च + छ— समूढैः। १० छ—शोकि। ११ ग + च + छ—तथैतै। १२ ख—मिति स्मृतम्।

(८) तेन धर्म्मार्थं[1] यद्दत्तं तत्प्रमाणमेवेत्यर्थः ।

अतिवृद्धो गलितेन्द्रियः ।

(९) तथा

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्ये चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

(१०) नर्म्मदत्तं क्रीडादत्तम् । एवमन्यत्रापि यद्रूपेण यद्दानं तद्रूपश्चासौ न भवति[2] तदाच्छिद्य गृह्णीयात ।

(११) तथा च मनुः—

धर्मार्थं[3] येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तेन तद्भवेत् ॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा[4] दाप्यः सुवर्णं स्यात्तस्य देयस्य[5] निष्कृतिः ॥

(१२) यदि संसाधयेदिति त्वया मे यद्दत्तं तन्मया न त्वयि देयमिति यावत्स्वीकृतं[6] तद्देहीति यावद्विवदतीत्यर्थः[7] ।

(१३) नारदः—

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीभृता ॥

## अथ भृतकविधिः ।

(१) तत्र बृहस्पतिः—

अदेयादिकमाख्यातं भृतानामुच्यते विधिः ।
शुश्रूषामभ्युपेत्यैतत्पदमादौ निगद्यते ॥

१ छ—धर्म्मार्थ्यं । २ च—भवतीति । ३ घ—नर्मार्थं । ४ छ—राजा । ५ च + छ—तस्यदोषस्य । ६ ख + च—यत्स्वीकृतं । ७ ख + ग + च + छ—वा यदि वदति ।

(२) शुश्रूषामभ्युपेत्याशुश्रूषोरेतत्पदं विवादपदमित्यर्थः ।

(३) **वेतनस्यानपाकर्म्म तदर्थं [illegible]पालयोः ।**

**क्रमशः कल्प्यते वादो भृतभेदत्रयं त्विदम् ॥**

(४) कः शुश्रूषकः कतिविधो वा

**तत्र नारदः—**

**शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ॥**
**चतुर्विधः कर्म्मकरः शेषा दासास्त्रिपञ्चकाः ॥**

(५) चतुर्विधाः कर्म्मकराः दासेन सह पञ्चशुश्रूषका भवन्ति ।

(६) **कथं चतुर्विधत्वं तत्र नारदः—**

**शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्म्मकृत् ।**
**एते कर्म्मकरा ज्ञेया दासास्तु गृहजादयः ॥**
**सामान्यमस्वतन्त्रत्वमेषामाहुर्म्मनीषिणः ॥**

(७) तदेव चतुर्विधत्वं

**बृहस्पतिरप्याह—**

**विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधः ।**
**विद्यात्रयी समाख्याता ऋग्यजुःसामलक्षणा ॥**
**तदर्थं गुरुशुश्रूषां प्रकुर्य्याच्छास्त्रदेशिताम् ।**

(८) **नारदः—**

**आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।**
**तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥**

---

१ च—कथ्यते । २ छ—वादौ । ३ ग+च—विधाः ।

(९) द्वितीयविधायां बृहस्पतिः—

विज्ञानमुच्यते शिल्पं हेमकूप्यादि[1] संस्कृतिः ।
नृत्यादिकं च तच्छिष्यः कुर्य्यात्कर्म्म गुरोर्गृहे ॥

(१०) विज्ञानार्थिन एव नारदेनान्तेवासित्वमुक्तम् ।

(११) स्वं शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया ॥
आचार्य्यस्य वसेदन्ते[2] कालं कृत्वा सुनिश्चितम् ।
आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ॥
न चान्यत्कारयेत्कर्म्म पुत्रवच्चैनमाचरेत् ।

(१२) तथा—
शिक्षयन्तमदुष्टञ्च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्य्यस्यैव तत्फलम् ॥

(१३) वधोऽत्र ताडनमात्रम् । बन्धो बन्धनम् । कृतं कालम् एतावत्कालं यावन्मया भवदीयमेतत्कर्त्तव्यमिति नियमितं पूर्णेप्यध्ययने[3] तत्पालयेदन्तेवासीत्यर्थः । तत्फलं भृत्यादिफलम् ।

(१४) तथा—
गृहीतशिल्पः समये कृत्वाऽऽचार्यप्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्त्तते ॥

(१५) तृतीयचतुर्थविधं कामादिनिमित्तेन[4]—

बृहस्पतिराह—
यो भुङ्क्ते परदासीन्तु स ज्ञेयो वडवाभृतः ।

१ छ—कुप्यादि । २ ग—अन्ते वासं । ३ छ—पूर्णेऽध्ययने । ४ घ—निमित्तेन रहितः ।

कर्म तत्स्वामिनः कुर्य्याद्यथान्योर्थेऽभृतोनरः[1] ।
बहुधार्थभृतः प्रोक्तस्तथा भोगभृतोऽपरः[2] ।
कर्म्म कुर्य्यात्प्रतिज्ञातं लभते पारिभाषिकम्[3] ॥
द्विप्रकारो भोगभृतः कृषिगोजोविनां स्मृतः ।
जातशस्यात्तथाक्षीरात्स लभेत न संशयः ।

(१६) भोगभृतविशेषत्वाच्चतुष्ट्वम्[4] । नारदेनैषां भृतकपदेन तृतीयप्रकारत्वमुक्तम् ।

(१७) तेषां प्रकारान्तरमप्याह स एव—

भृतकस्त्रिविधो ज्ञेय उत्तमाधममध्यमाः ।
शक्तिभक्त्यनुरूपत्वादेषांकर्माश्रया भृतिः[5] ॥
उत्तमश्चायुधीयोऽत्र मध्यमश्च कृषीवलः ।
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ॥
अर्थेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
सोऽधिकर्म्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ।

(१८) बृहस्पतिनाऽप्यस्याप्यर्थभृत एवान्तर्भावः कृतः नारदेन तु सामान्यविशेष भावेन भेदेन गणनम् ।

(१९) एषां मध्ये[6] किं कस्य कर्मेति—

तत्र बृहस्पतिः—

शुभककर्मरास्ते[7] च चत्वारः समुदाहृताः ।
चत्वारः[8] शिष्योऽन्तेवासी भृतकः कर्मकरः[9] ॥

---

१ ग+च—भृतकोनरः । २ च—भोगभृतःपरः । ३ ग—पारिभाषितम् । ४ ख—भोगभृतस्याप्यर्थं । ग+च+छ भोगभृतस्याप्यर्थभृतविशेषत्वाच्चतुष्ट्वम् । ५ छ—भक्तानुरूपत्वात् । ६ च—एषां मध्येऽपि । ७ ग+च+छ—ह्येते । ८ च—चत्वारश्च । ९ छ—कर्मकरश्च ।

जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ।
कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ॥
अशुभं दासकर्मोक्तं शुभं कर्मकरे स्मृतम् ।
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ॥
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ।
गच्छतः स्वामिनः स्वाङ्गैरुपस्थानमथान्ततः ॥
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ।

(२०) नारदः—

गृहजातस्तथाक्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितोमहतश्चर्णाद् युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासस्तु विज्ञेयस्तथैव वडवाभृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

(२१) दायादुपागतः पित्रादिक्रमागतः । अनाकालभृतो दुर्भिक्षपोषितः मोक्षित इति ऋणमोक्षणेनाभ्युपेतदास्यः कृतः । एतावन्तं कालं तवाहं दास इति कृतसमयः । भक्तदासः सुभिक्षेऽपि भक्तार्थमङ्गीकृतदास्यः ।

(२२) नारदः—

राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः ।
न तस्य हि विमोक्षोऽस्ति न विशुद्धिः कथञ्चन ।

---

१ ग—येत्वन्य । २ च—इच्छतः । ३ छ—वासितः । ४ ग—मोक्षितश्च इति । ५ ग । च—ऋणमोचने । ६ ख + छ —एतावन्तं तवाहं दास इति कृतसमयः नारदः ।

(२३) कात्यायनः—

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविण्नृपः ॥

क्षत्रविडिति समाहारे द्वन्द्वः ।

(२४) दक्षः—

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥

अथ कस्य दासस्य कथं मोक्षोऽमोक्षोवा

(२५) तत्र नारदः—

तत्र पूर्वश्चतुर्वर्गो दासत्वन्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

(२६) तत्रेति । गृहजातक्रीतलब्धपरम्परागत इत्यर्थः । तत्रैव दासपदं मुख्यमन्यत्र पारतन्त्र्यगुणाद्गौणं तेन दासिनोऽत्यत्र पूर्वचतुर्वर्गग्रहणम् ।

(२७) तथा—

विक्रीणीते स्वतन्त्रः सन्नात्मानं यो नराधमः ।
स जघन्यतमस्त्वेषां सोऽपि दास्यान्न मुच्यते ॥

(२८) स्वतन्त्रोऽस्वामिकः । विना स्वामिप्रसादादित्यत्रापि सम्बध्यते ।

(२९) यत्तु—

न स्वामिना विसृष्टोऽपि शूद्रो दास्याद्विमुच्यते ।

---

१ छ—येतु । २ छ—विक्रीत । ३ ग+च+छ—परम्परीणा इत्यर्थः । ४ घ+छ—तेषां ।

निसर्गजं हि तत्तस्य कस्तं तस्माद्व्यपोहति[1] ॥

(३०) इति मार्कण्डेयपुराणे हरिश्चन्द्रवाक्यं तद्दासनिन्दापरमन्यथा[2] तस्यैव[3] दासस्य विमोक्षो नाभविष्यदिति ।

(३१) तथा—

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥

उत्तरस्य दास एवासौ न भवतीत्यर्थः ।

(३२) चौरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते ॥
यश्चैषां स्वामिनं कश्चिन् मोक्षयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत सः ॥

(३३) एषां मध्ये —

[4]अनाकालभृतो दास्यान्मुच्यते गोयुगन्ददत् ।

भक्षितश्चापि यद्[5]दुर्गे तेन[6] शुद्ध्यति कर्मणा ॥

(३४) दुर्भिक्षे भक्षितं यत्तद्गोयुगसहितं दत्वा मुच्यत[7] इत्यर्थः ।

(३५) आहितोपि धनन्दत्वा स्वामी यद्येनमुद्धरेत् ।

आहितो बन्धकीकृतः ।

(३६) अथापगमयेदेनं सोपि क्रीतादनन्तरः ॥

---

१ घ – व्यपोहतीत्यादि । च - दास्याद्व्यपोहति । २ च - अन्यथा शूद्रेषु दास्यहेतुक्रयादिकं न प्रसज्येत इति । ३ छ शूद्रेषु दास्यात्तत्क्रयणादिकं न प्रसज्येति । ४ च - अन्नाकाल । ५ च – यत्तत्र तन्न शुद्ध्यति । ६ ग + छ तन्न । ७ छ मुच्येतेत्यर्थः ।

(३७) यस्मिन्ना[1]हितो[2] दासस्[3]तमेवोपगमयेत्। ग्राहयेत्[4] न मोचयेत्। तदा तस्यैवासौ क्रीतादविशिष्ट इतिलक्ष्मीधरादयः।

(३८) **ऋणं तु सोदयं दत्वा ऋणी दास्याद्विमुच्यते।**

(३९) ऋणार्थं कर्म कारयेदित्यनेन ऋणकर्मकरः कथितः।

(४०) **कृतकालव्युपरमात्कृतका[5]लोऽपि मुच्यते॥**

(४१) यः कश्चित्कस्माच्चिद्धेतोः ऋणस्थितिकालं यावद्दासीकृतः स कृतकः कर्मणा ऋणक्षयेणावधौ पूर्णे मुच्यते।

**तवाहमित्युपगतो रणे प्राप्तः पणे जितः।**
**प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा॥**

दा[6]सेनापरेणेत्यर्थः।

**भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते।**
**निग्रहाद्बडवायाश्च मुच्यते बडवाभृतः॥**

(४३) बडवा दासी तस्या निग्रहस्त्यागः तदनन्तरं स्वामिकर्मकरत्वं[7] निवर्त्तत[8] इत्यर्थः। भक्तार्थं यः कर्मकरः सोऽपि तत्त्यागान्मुच्यत इत्यर्थः।

(४४) **कात्यायन :—**

**स्वदासीं यस्तु संगच्छेत्प्रसूता[9] तु भवेत्ततः।**
**अवेक्ष्य बीजं कर्त्तव्या अदासी सान्वया तु सा॥**

(४५) **प्रकाशपारिजातरत्[10]नाकरेषु—**

१ घ- यदि यस्मिन्नाहितो। २ च- स बन्धकीकृतः क्रीततुल्य इत्यर्थः ३ ग— तमेवोपसंगमयेत्। ४ च- ग्राहयेद्यदि न मोचयेत्। ५ ग+च+छ—कृतकोपि वि। ६ च- तुल्यकर्मणा दासेनापरेणेत्यर्थः। ७ छ- कर्तृत्वं। ८ च- तत्त्यागेन प्रमुच्यत इत्यर्थः। ९ च- तत्प्रसूता भवेत्ततः
१० ग+च—रत्नाकरेषु।

स्वामिनः पुत्रान्तराभावे मा स्वजनितपुत्रमहिनाऽदासीकार्य्या नतु पुत्रान्तरमत्व इत्युक्तम् ।

यः प्रसादेनादासः कार्यस्तत्र प्रकारमाह

नारद :—

(४६) स्वदासमिच्छेद्यः कर्त्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याशु भिन्द्यात्कुम्भं सहाम्भसा ॥
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरन् ।
अदास इतिचोक्त्वा त्रिः प्राङ्मुखन्तमथोत्सृजेत् ॥
ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥
अधनास्त्रय एवैते भार्य्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति तस्यैते तस्य तद्धनम् ॥

(४७) देवल :—

पितर्य्युपरते पुत्रा विभजेयुः पितुर्द्धनम् ।
अस्वाम्यं हि भवेत्तेषां निर्दोषे पितरि स्थिते ॥
पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते ।
तद्धन्नियतमस्वाम्यं सर्वार्थेष्वब्रवीन्मनुः ॥
विश्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ।
नहि तस्यास्ति किञ्चित्स्वं भर्तृहार्यधनो हि सः ॥

---

१ ग – तत्स्वामिनः । २ च स्वं दासमिच्छेद्यः । ३ च प्रीतिमानसः । ४ च तथोत्सृजेत । ५ ग + छ भवेदेषां । ६ ग सर्वस्वेष्वब्रवीन्मनुः ।

(४८) कात्यायन :—

**दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः ।**

**प्रसादाद्विक्रयाद्यत्तु[1] न स्वामी धनमर्हति ॥**

(४९) स्वामिप्रसादादात्मविक्रयाच्च यल्लब्धं दासेन तद्दासधनं स्वामी नार्हति ।

(५०) **दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।**
**यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥**

(५१) अत्र दासपदोपस्थापितप्रतियोगिकमेव दासीत्वं दासत्वञ्च यदि न्यायात्, अतोऽस्वामिकाऽन्यस्वामिका[2] वा परिणीता सती परस्वामिनः स्वीभवति । अर्थाच्च दासोढत्वं[3] पूर्वस्वामिदास्यमोक्षहेतुरुक्तः । अतएव तत्प्रकरणे वाक्यमिदं स्वाम्यनुमत्या च दासकृतं प्रमाणमतस्तद्भिन्नविषये चेटिकापरिणयवन्न[4] पूर्वस्वामिस्वत्वहानिरिति ।

---

## अथ दास्याधिकारिणः ।

(१) तत्र नारद :—
**वर्णानां प्रातिलोम्येन दासत्वन्न विधीयते ।**
**स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥**

(२) उत्तमस्य नीचदासत्वन्न भवति दारवत्[5] । स्वाश्रमधर्मत्यागिनः परं तादृशी दासतेत्यर्थः ।

(३) कात्यायन :—

---

१ ग—प्रसादविक्रयाल्लब्धं च । छ प्रसादविक्रयाद्यत्तु । २ क – अन्यस्वामिका वा । ३ ग – अनुमतिपूर्वकं पूर्वस्वामिनः । ४ ग – परिणयवन्न च – परिणयनेन । ५ च—भवतीति दारत्ववत् ।

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ।
समवर्णन्तु[1] विप्रस्तु दासत्वन्नैव कारयेत् ॥
शीलाध्ययनसम्पन्नस्तदूनं कर्म कामतः ।
तत्रापि नाशुभं किञ्चित्प्रकुर्वीत द्विजोत्तमः ॥
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहीयते[3] ।
क्षत्रविट्शूद्रधर्मस्तु समवर्णे कदाचन ॥
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः ॥

(४) सगुणो निर्गुणमधिकगुणो न्यूनगुणं कर्म कारयेत्[2] ।
तत्रापि अशुभं विण्मूत्रशोधनादिकन्न[4] कारयेदित्यर्थः[5] ॥

(५) मनु :—
क्षत्रियञ्चैव वैश्यश्च ब्राह्मणो वृत्तिकर्षितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ॥

स्वानि स्वजात्युक्तानि ।

(६) दास्यन्तु कारयेन्मोहाद्[6]ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्रभावित्वाद्राज्ञा दाप्यः शतानि षट् ॥

दास्यं शूद्रोचितं द्विजानुचितमिति यावत् ।

(७) शूद्रन्तु कारयेद्दास्यं[7] क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयम्भुवा ॥
न स्वामिना विसृष्टोऽपि[8] शूद्रो दास्याद्विमुच्यते ।
निसर्गजं हि तत्तस्य कस्तस्मात्तमपोहति[9] ॥

---

१ च—समवर्णेपि । २छ—कारयेत् । ३ च + छ—विहन्यते । ४ ग—विण्मूत्रादिशोधनं । ५ ख—कारयेन्मोहादित्यर्थः । ६ छ—कारयन् । ७ च—कारयेत्कर्म । ८ छ—विसृष्टो हि । ९ च + छ—कथं तस्माद्व्यपोहति ।

दास्याद्दासकर्मणः ।

(८) विष्णु :—

यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसो दण्डः ।

उत्तमवर्णं ब्राह्मणं उत्तमसाहसः पणसहस्रम् ।

(९) कात्यायन :—

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्संसृजतीं यस्तु दासीं कुर्यात्कुलस्त्रियम् ।
संक्रामयति वान्यत्र दण्डयस्तच्चाकृतं भवेत् ॥

(१०) स्वेच्छोपगतां कुलस्त्रियं यो दासीं कुर्यात् अन्यत्र वा समर्पयेत् स दण्ड्य इत्यर्थः ।

(११) बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीश्च प्राप्नुयात्पूर्वसाहसम् ॥
विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन्प्राप्नुयाद्द्विशतं दमम् ॥

(१२) बालधात्री दास्यपि सती बालकस्तन्यदात्री अदासी शरणागतादिः विक्रोशमाना स्वविक्रयमनिच्छन्ती पूर्वसाहसं सार्द्धपणशतद्वयम् ॥

१ च—तत्राकृतं । २ ग । छ—स्वेच्छयोपगतां । ३ छ—शरणागता

## अथ वेतनस्यानपाकर्म[1] ॥

(१) तत्र नारदः—

भृताय वेतनं दद्यात्कर्म स्वामी यथाकृतम् ।
आदौ मध्येऽवसाने वा कर्मणां यद्विनिश्चितम् ॥
भृतावनिश्चितायान्तु दशमं भागमाप्नुयुः ।
लाभगोवीर्यशस्यानां वणिग्गोपकृषीवलाः ॥

लाभो वाणिज्येन वृद्धिः[2] । गोवीर्यं दुग्धम् ।

(२) याज्ञवल्क्यः—

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।

(३) बृहस्पतिः—

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।
भक्ताच्छादनभृत्सीरी भागं गृह्णीत पञ्चमम्[3] ॥
जातशस्यत्रिभागन्तु प्रगृह्णीतोपधाभृतः ।

उपधा उपधिः । (४) यदत्रोत्पद्यते[4] तत्र ते त्रिभाग[5] इति न वस्त्रान्नादि किञ्चिद्दीयते यस्य स उपधाभृतः तस्य त्रिभागः[6] । भक्ताच्छादनदाने तु पञ्चमः । नारदोक्तो दशमोंशः सीरवाहकेतरविषयः[7] ।

(५) आपस्तम्बः—

उद्वसतः कीनाशस्य कर्मनाशो दण्डताडनम् ।
तथा पशुपस्यावरोधनञ्चास्य पशूनाम् ।

(६) उद्वसतः पलायमानस्य कीनाशस्य हलवाहकस्य दण्डताडनम् । तथा पशुपस्य गोपालस्य तस्य पशूनां चावरोधनमधिकम् ।

---

१ छ—अथ वेतनानपाकर्म । २ ख + ग + छ—धनवृद्धिः । ३ छ—पञ्चकम् । ४ छ—यदत्रोत्पत्स्यते । ५ ख + छ—त्रिभाग । ग + घ—तत्र तत्ते त्रिभाग । ६ ख—तस्य भाग । ७ ख—विषयकः ।

(७) वृद्धमनुः—

समुद्रयानकुशला देशकालार्थवेदिनः ।
नियच्छेयुर्भृतिं यान्तु सा स्यात्प्रागकृता यदि ॥

समुद्रयानकुशला बणिग्वेतनविज्ञा इत्यर्थः ।

(८) बृहस्पतिः—

गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्चेद्दमं दाप्यो द्विगुणन्तस्य[1] वेतनम् ।

समर्थः सन्चेन्न करोतीति[2] सम्बन्धः ।

(९) याज्ञवल्क्यः—

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत्[3] ।
अगृहीते समं दाप्यो भृत्यैरक्ष्य उपस्करः ॥

कर्म त्यजन्[4] वेतनिको गृहीतवेतनो द्विगुणमगृहीतवेतनस्तु समं दाप्यः ।
भृत्यैर्हलवाहकादिभिः । उपस्करो लाङ्गलादीनां[5] योक्त्रादिः ।

(१०) नारदः—

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात् ।

(११) वृद्धमनुः—

स चेन्न कुर्य्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम् ।

इदमारभ्याकुर्वतः ।

(१२) अनारम्भे तु मनुः—

भृतोऽनार्त्तो यो न कुर्याद्दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयश्चास्य वेतनम् ॥

---

१ ग + घ + छ—तस्य । २ छ—सन्कर्म न करोतीति । ३ ख + ग—हरेत् ।
४ ख + ग + घ + छ—कर्मारभ्य त्यजन् । ५ छ—लाङ्गलकादीनाम् ।

यथोक्तमार्त्तः[1] स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥
आर्त्तस्तु[2] कुर्यात्स्वस्थः सन्यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य स लभेतैव वेतनम् ॥

(१३) अल्पोनस्य अल्पावशिष्टस्य । आर्त्तस्तु[3] कर्म हित्वा स्वस्थः[4] संश्चिरेणापि कृत्वा वेतनं लभते ।

(१४) नारद :—

कालेऽपूर्णे त्यजन्कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादपाक्रामन्[5] यावत्कृतमवाप्नुयात् ॥

(१५) विष्णु :

भृतकश्चापूर्णे काले कर्म त्यजन् सकलमेव मूल्यं दद्यात् । राज्ञे च पणशतं दद्यात् । स्वामी चेद्भृतकमपूर्णे काले जह्यात्, तस्य सकलमेव मूल्यं दद्यात् । पणशतं राजन्यन्यत्र भृतकदोषात् ।

मूल्यं वेतनम् ।

(१६) वृद्धमनु :—

प्रमादान्नाशितं दाप्यः समं छिद्रोहिनाशितः ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥

दाप्यो भृतकः प्रकरणात । तद्दोषमन्तरेण तु नष्टं स न दाप्य इत्यर्थः ।

(१७) बृहस्पति :—

प्रभुणा विनियुक्तः सन् भृतको विदधाति यत् ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

तदर्थं स्वाम्यर्थम् । अशुभं चौर्यादि ।

---

१ च + छ सुस्थो वा । २ छ आर्त्तोपि कुर्यात्सुस्थः । ३ छ = आर्त्तो हि । ४ छ सुस्थः सन् । ५ छ अपक्रामन् ।

(१८) मत्स्यपुराणे—

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छ ते।
दण्ड्य:[1] स मूल्यं सकलं धर्मज्ञेन महीभृता ॥

(१९) वृद्धमनु :—

पथि[2] विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि[3]।
अगतस्यापि देयं स्याद् भृतेरर्द्धं लभेत सः ॥

अगतस्यापि पूर्वं[4] आवितमध्वानं न[5] गतस्यापि भृतकस्य भृतिर्वेतनं[6] देयं स्यात् किन्त्वगताध्ववेतनार्द्धमित्यर्थः।

(२०) कात्यायन :—

यदा च पथि तद्भाण्डमासिदृध्येत ह्रियेत[7] वा।
यावानध्वागतस्तेन प्राप्नुयात्तावतो भृतिम् ॥

आसिदृध्येत[8] केनापि प्रतिरुदृध्येत।

(२१) बृहस्पति :—

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते।
राज्ञा दापयितव्यः स्याद्विनयश्चानुरूपतः ॥

(२२) कात्यायन :—

त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा।
आप्नुयात्साहसं[9] पूर्वं ग्रामे त्र्यहमपालयन् ॥

सहायं वैतनिकादिम्[10]।

---

१ ङ दाप्यश्च। २ क अथ। ३ ख। च। छ त्यजेद्यदि। प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा। ४ ग। छ पूर्वश्रावित। ५ ख। च अगतस्यापि। ६ ख भृतिर्देया स्यात्। ग भृतकस्य वेतनम्। च कृतवेतनम्। छ भृतकस्य कृते वेतनं। ७ ग+छ ह्रियेत वा। ८ छ बाद्ध्येत। ९ ग साहसं १० छ वैतनिकादि।

## अथ पण्यस्त्रीविधिः[1] ।

(१) तत्र नारदः—

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्[2] ।
अनिच्छञ्छुल्कदातापि शुल्कहानिमवाप्नुयात् ॥

(२) स्मृतिः—

व्याधिता सश्रमा[3] व्यग्रा राजकर्म्मपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या बडवा स्मृता ॥

अवाच्या निर्दोषा । बडवाऽत्र वेश्या ।

(३) मत्स्यपुराणे—

अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत्[4] ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥

अयोनौ मुखादौ मेहनं प्रवेशयेत् । स्वमात्रार्थमानीय बहुभिः सह योजयेद्वा स वेश्याशुल्कमष्टगुणं दण्डञ्च[5] तथा दद्यात् ।

(४) तथा—

अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥
नीत्वा भोगं न यो दद्यात् दाप्योद्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते[6] ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं धनम्[7] ।
दद्युः पृथक्पृथग्राज्ञे[8] दण्डञ्च द्विगुणं परम् ॥

---

१ च—वेश्या । २ ग+च हरेत् । ३ ग स्वाश्रमा । ४ च—वासयेत् । ५ ग+च+छ राजदण्डञ्च । ६ छ धर्मान्न हीयते । ७ ग+च दमम् । ८ ग—तस्य दद्युः पृथग्राज्ञे । ङ—तस्माद्दद्युः । च+छ तस्या दद्युः पृथग्राज्ञे ।

(५) नारद :—

वेश्या[1] प्रधाना ये तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ।

अथ[2] गृहादिभाटकम् ॥

परभूमौ गृहं कृत्वा[3] स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ।
स्तोमाद्विना[4] वसित्वा तु परभूमावनिच्छतः ।
निर्गच्छेत्तृणकाष्ठानि[5] न गृह्णीयात्कथञ्चन ॥

(६) कात्यायन[6] :—

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स भाटकम् ॥
वारि[7] परकृतप्रतिष्ठितमत्र विवक्षितम् ।
हस्त्यश्वगोखरोष्ट्रादीन्[8] गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः[9] स भाटकम् ॥

(७) वृद्धमनु :—

यो भाटयित्वा शकटं नीत्वा नान्यत्र[10] गच्छति ।
भाटन्न दद्याद्दाप्योसावनूढस्यापि भाटकम् ॥
शकटं वृषनौकादेरप्युपलक्षणम् । अनूढस्यावाहितस्यापि शकटादेः ।

---

१ घ = वेश्याः प्रधाना यास्तत्र । २ घ + छ = अथ गृहादिभाटकम् । घ = अथ भूम्यादिभाटकविधिः । ३ छ = कृत्वा । ४ छ = स्तोमं विना । ५ ग + घ = निर्गच्छंस्तृणकाष्ठानि । ६ ग + ङ = अथभूम्यादिभाटकविधिः । कात्यायनः । ७ ग + घ = वारि परकारिता । ८ घ = नारदः हस्त्यश्व । ९ ग + घ = नार्पयेत्कृतकृत्यः सन् तावद्दाप्यः । १० ग + घ = चान्यत्र ।

(८) नारद :—

ऽोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्[१] ।

ग्रहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात्[२][३] ॥

अन्यथा अप्रत्यर्पितं सद्राजदैवकमन्तरेण कालदोषादिनापि नष्टं ग्रहीतुश्च[४] समाधेयं भवेदित्यर्थः ।

---

## अथ स्वामिपालविवादः ॥७॥

(१) तत्र मनु :—

गोपः क्षीरभृतिर्यस्तु स दुह्याद्दशतोऽवराम् ।

गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥

क्षीरभृतिः क्षीरमात्रवेतनः । (२) दशसु धेनुषु एकां श्रेष्ठाम् । अभृतोऽत्र[५] ग्रासाच्छादनादिना । इदं धेनुमात्ररक्षणे ।

(३) धेन्वधेनुरक्षणे तु नारदः—

गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः[६] ।

प्रतिसंम्वत्सरं[७] गोपे सन्दोहश्चाष्टमेऽहनि ॥

वत्सतरी त्रिहायणी गौः । यावत्योऽत्र धेनवस्तावतीनामष्टमाहे सम्यग्दोहश्च भृतिः ।

(४) बृहस्पति :—

तथा धेनुभृतः क्षीरं लभेत[८] ह्यष्टमेऽखिलम् ।

धेनुभृतो गोपः[९] ।

---

१ छ – कालेप्युपानयेत् । २ च – ग्रहीतुर्वाभवेद्भुग्नं । ३ छ – वान्यत्र । ४ ग + च – गृहीतुः समाधेयं भवेदित्यर्थः । ५ ग + च = छ – अभृते ग्रासाच्छादनादिना । ६ ग – द्विशतोभृतिः । ७ छ = सम्वत्सरे गोपे । ८ च – लभते । छ – लभेरन्नष्टमेऽह्नि । ९ च – गोपाः ।

(५) नारद :—

उपानयेद्गां[1] गोपाय प्रत्यहं रजनीक्षये ।

चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्[illegible]पानयेत् ॥

चीर्णाः भक्षिततृणाः । पीताः[2] पीतजलाः ।

(६) या[illegible]वल्क्य :—

यथा[3]र्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा ।

प्रमादकृतनष्टांश्च[4] प्रदाप्यः कृतवेतनः ॥

(७) मनु[5] :-

दिवा वक्तव्यता गोपे[6] रात्रौ स्वामिनि तद्गृहे ।

योगक्षेमा[7]न्यथा[8]त्वे तु पालो वक्तव्यतामियात् ॥

(८) मनुनारदौ—

विक्रम्य तु हृतश्चौरैर्न पालो दातुमर्हति ।

यदि देशे च काले च स्वामिनः स्वस्य शंसति[9] ॥

देशेऽन्वेषणयोग्ये । एवं कालेऽपि ।

(९) व्यास :—

पालग्रहे[10] ग्रामघाते तथा राष्ट्रस्य विभ्रमे[11] ।

[illegible]प्रणष्टं हृतं वा स्यान्नपालस्तत्र किल्विषी ॥

(१०) बृहस्पति :—

[illegible]मिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।

व्याय[12]च्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदय[illegible] ॥

---

१ च – उपानयेद्गा गोपालः । २ च पीताश्च । ३ छ – अथार्पितान् । ४ च + छ – हृत । ५ छ – नारदः । ६ ग पाले । ७ च – क्षेमे । ८ च – येत्तु । ९ छ – स्तथा । १० क – पाणिग्रहे । ११ ग – विद्रवे । च । छ – राष्ट्रस्य विप्लवे । १२ छ – आयच्छेत् ।

श्वभ्रो[1] गर्तः । दरी कन्दरा[2] ।

(११) अव्यायच्छन्नविक्रोशन् स्वामिने चानिवेदयन् ।
वोढुमर्हति गोपस्तं विनयञ्चैव राजनि ॥

वोढुं दातुम् ।

(१२) मनु :–

नष्टं विनष्टं कृमिभिः श्वहतं[3] विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्याद्गोप एव च ॥

नष्टं चौरादिनाऽपहृतं गोपकर्त्तव्यप्रतीकारेण हीनं सन्नष्टादिकं भूतम् । तेन पालवैगुण्यं तद्दाने कारणमित्यर्थः ।

(१३) याज्ञवल्क्य :—

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्द्धत्रयोदशपणाः स्वामिनो द्रव्यमेव च ॥

(१४) विष्णु :—

अननुज्ञातो[4] वहन् पञ्चविंशतिकार्षापणम् ।

(१५) ब्रह्मपुराणे–

गृहीतमूल्यो गोपालो गां[5] त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्दण्ड्यः शलाकी वनगोचरः ॥

शलाकी[6] नापितः ।

(१६) यदि रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्योऽदत्वा गोपालवेतनम् ॥

---

१ छ – श्वभ्रं । २ च कन्दरादिः । ३ घ – श्वाहतम् । ४ ग – अननुज्ञातोऽहरन् । च + छ – अननुज्ञानाद्वहन् । घ + ख – अनाज्ञातोद्वहन् । ङ – अननुज्ञातोद्वहन् । ५ छ – गास्त्यक्त्वा । ६ च – शलाकी शलाकायामर्पितः ।

(१७) नारद :—

अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु तु विशुद्धिः स्याद्वालशृङ्गादिदर्शनात् ॥

(१८) मृतत्त्वनिश्चयं कुर्यात् केनापि प्रकारेणेत्यर्थः ॥

## अथ संविद्व्यतिक्रमः ॥८॥

(१) तत्र बृहस्पति :—

ग्रामश्रे[1]णिगणानाञ्च संकेतसमयक्रिया ।
बा[2]धकाले तु सा कार्या धर्मकार्ये तथैव च ॥
वा[3]टचौरभये बाधा सर्वसाधारणी स्मृता ।
तत्रोपग[4]मनं कार्यं सर्वैर्नैकेन[5] कुत्रचित् ॥
को[6]शेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथ[7]मं कृत्वा कुर्य्युः कार्याण्य[8]नन्तरम् ॥
शुचयो वेदधर्मज्ञा दान्ता दक्षाः कुलोद्भ[9]ताः ।
सर्वकार्य्यप्रवीणाश्च कर्तव्यास्तु महत्तमाः ॥
द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनन्तेषां ग्रामश्रे[10]णिगणादिभिः ॥

ग्रामो ग्रामवासिसमूहः । श्रे[11]णिः कारुसमूहः ।
गणो ब्राह्मणादिसमूहः ।

---

१ च = श्रेणी । २ ख + च + छ = वाधाकाले । ३ च राजचौर । ४ च = शमनं । ५ ग + ङ + छ = केनचित् । ६ छ कोषेण । ७ क = परमं । ८ च = कर्माण्यनन्तरम् । ९ च = छ + कुलोद्भवाः । १० च = श्रेणी । ११ च = श्रेणी ।

(२) याज्ञवल्क्य :—

कर्तव्यं वचनं तेषां समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम् ॥

(३) कात्यायन :—

युक्तियुक्तञ्च यो हन्याद्वक्तुर्योऽनवकाशदः ।
अयुक्तं तत्र यो ब्रूयात्प्राप्नुयात्पूर्वमाहसम् ॥

(४) नारद :—

पाखण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥

पाखण्डाः त्रयीवाह्याः । नैगमाः पौराः । पूगो वणिगादिसमूहः । व्रात आयुधीयसमूहः । (५) आदिपदेन सर्वसंग्रहादुपलक्षणतैव तेषाम् ।

(६) याज्ञवल्क्य :—

निजधर्म्माविरोधेन यस्तु सामयिको भवेत् ।
सोपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

(७) स्वगणयोगक्षेमार्थं मासि मासि राजोपस्थानं कार्यमित्येवं रूपः सामयिको-धर्मः । मम कृते मासि मासि शान्तिः करणीया भवद्भिरित्यादी राजकृतो धर्मस्तद्व्यतिक्रमो न कार्य इत्यर्थः ।

(८) कात्यायन :—

राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥

---

१ च = श्रेणी । २ ग = न तेषाम् । ३ च = समयेऽकृते । ग = समयकृते । ४ ग = राज्ञाकृतो । ५ च = गर्वात्स पापो ।

(९) याज्ञवल्क्य :—

गणद्रव्यं हरेद्यस्तु सम्विदं लंघयेत्तु यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

(१०) कात्यायन :—

[illegible] भेदकारी च [illegible]नाशकः ।
उच्छेद्याः सर्व एवैते विज्ञाप्यैवं[1] नृपे भृगुः ॥

(११) समयक्रियेत्युपक्रम्य[2] बृहस्पति :—

[illegible]लनीया समस्तैस्तु यः समर्थो विसम्वदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥
तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुः सुवर्णाः षण्निष्का दण्डस्तस्य विधीयते ॥

(१२) मनुस्त्वत्रैव[3] षण्निष्कान्तमभिधाय शतमानन्तु राजतमि त्यधिकमाह।
यद्यपि निष्कश्चतुः सुवर्ण एव प्रसिद्धस्तथापि
सार्द्धं शतं सुवर्णानां निष्कमाहुर्मनीषिणः ।
तथा पञ्चसौवर्णिको निष्क इत्याद्युक्तनिष्कान्तरवारणायात्र[4] चतुः सुवर्ण इति निष्कविशेषणम् । शतमानं रक्तिकानां[5] विंशत्यधिकशतत्रयम् ।

(१३) तथा—

अरुन्तुदः सूचकश्च भेदकृत्साहसो तथा ।
श्रेणि[6]पूगनृपद्वेष्टा क्षिप्रं निर्वास्यते ततः ॥
अरुन्तुदः मर्मस्पृक् । सूचकः पिशुनः ।

---

१ ग– विख्याप्यैवं । २ च समयक्रियाभ्युपक्रमे । ३ च मनुः । षण्निष्कानभिधाय ।
४ क वारणा यत्र । ५ छ रत्तिकानां ६ च । छ श्रेणी ।

(१४) कात्यायन :—

एकपात्रेऽथ पङ्क्त्यां वा सम्भोक्ता येन यो भवेत् ।
अकुर्वंस्तत्तदा दण्ड्यस्तस्य दोषमदर्शयन् ॥

(१५) बृहस्पति :—[1]

सम्भूयैकमतं कृत्वा राजभागं हरन्ति ये ।
ते तदष्टगुणं दाप्या बणिजश्च पलायिनः[2] ॥
राजभागं राजदेयम् ।

(१६) याज्ञवल्क्य :—

समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥

(१७) बृहस्पति :—

ततो लभ्येत यत्किञ्चित्सर्वेषामेव तत्समम् ।

(१८) कात्यायन :—

गणमुद्दिश्य यत्किञ्चित्कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं[3] विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

(१९) गणमुद्दिश्य[4] गणहितव्याजेन यदृणं कृतं तत्कर्तृभिरेव देयमित्यर्थः ॥

(२०) गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ॥

(२१) अर्वागपि[5] ये सर्वसम्मत्या बणिगादिषु प्रविष्टास्तेपि सर्वस्य[6] सर्व पूर्वधनर्णस्य बाणिज्यादिमूलकस्य भागिन इत्यर्थः ॥

१ ख नारदः । २ ग+च बणिजः प्रपलायिनः । ३ क आत्मानं । ४ ख+ग गणमपदिश्य । ५ च अर्वागपि सर्वसम्मत्या बणिगादिगणादिषु । छ अर्वागपि ये सर्वसम्मत्या बणिगादिगणादिषु । ६ ग+च+छ पूर्वधनर्णस्य ।

(२२) तथैव भोज्यवैभाज्ये[1] दासधर्मक्रियासु[2] च ।
समूहस्थोंशभागी स्यात्प्रगतस्त्वंशभाग्न तु ॥

भोज्यं मोदकादि । वैभाज्यं धान्यादि । प्रगतः स्वकार्यमात्रार्थं गतस्तत्रांशभाङ् न भवतीत्यर्थः ।

## अथ विक्रीयासम्प्रदानम् ॥९॥

(१) तत्र नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥
अर्घाच्चेदवहीयेत[3] सोदयं पण्यमाहरेत्[4] ।
स्थायिनामेष नियमो दिग्लाभो[5] दिग्विचारिणाम् ॥

स्थावरस्य विक्रीतभूम्यादेः[6], क्षयः सस्याद्युत्पत्तिहानिः । जङ्गमस्य वृषभादेर्वाहनादिक्रिया । गवादेः फलं क्षीरादि । क्रीतं रत्नादि चेत्तेनादत्तमर्घादवहीयते[7] । न्यूनमूल्यं क्रमेण[8] स्यात्तदा मूल्यहानिसहितं[9] स्थायिने क्रेत्रे देयम् । दिग्विचारिणां देशान्तरगमनशालिनाम् । गमने यो लाभ स्यात्तमेव दद्यात् ।

(२) विष्णुः—

गृहीतमूल्यं[10] यः पण्यं क्रेतुर्नैव दद्यात् तस्यासौ
सोदयं[11] दाप्यो राज्ञा च पणशतं दण्ड्यः ॥

---

१ च+छ=वैभाज्य । २ ग+च–दान । ३ ग+छ+च–अर्घाच्चे । ४ क=मावहेत् । ५ ग–द्विभागो । ६ घ=मूल्यादेः । ७ क=अर्थादवहीयते । ८ ग–मूल्यक्रमेण । ९ ख मूल ।१० च मूल्यो । ११ च=सोदयं पण्यं दाप्यो ।

(३) विक्रेत्रा सर्वमूल्यग्रहणे कृते सति एतत्सर्वं द्रष्टव्यम् । मूल्यग्रहणार्थं धारणे तु न दोषः ।

(४) तथा च नारदः—[1]

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः।
अदत्तेन्यत्र समयान्नच क्रेतुरतिक्रमः ॥

उपहन्येत वा पण्यं दह्येतापह्रियेत वा।[2]
विक्रेतुरेव सानर्थो विक्रीयाऽसंप्रयच्छतः ॥

(५) याज्ञवल्क्यः—

राजदैवोपघातेन पण्यदोष उपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याऽप्रयच्छतः ॥[3]

(६) नारदः—[4]

दीयमानं न गृह्णाति क्रीतं पण्यं तु यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥

(७) मनुः—[5]

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ॥[6]
परेण तु दशाहस्य नादद्यान्नैव दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥
यस्मिन्यस्मिन्कृते कार्ये यस्येहानुशयोभवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥

(८) कात्यायनः—

क्रीत्वा प्राप्तन्न गृह्णीयाद्यो न दद्याददूषितम् ।

---

१ च – तत्र नारदः । २ ख – देवलः । ग + छ + च – नारदः । ३ ख – याचितस्यप्रयच्छतः ।
४ ग + च = नारदः । ५ च – अथ क्रयविक्रयानुशयः । ६ ग – दत्वा चैवा ।

स मूल्याद्दशभागन्तु दत्वा स्वं द्रव्यमाप्नुयात् ॥[1]

प्राप्तं स्ववशतामानीतम् ।

(९) स्ववशतामनानीते तु[2] विशेषमाह स एव

अप्राप्तेऽर्थे[3] क्रियाकारे कृतेनैव प्रदापयेत् ॥

एवं धर्मो दशाहात्तु परतोऽनुशयो[4] न तु ॥

(१०) क्रियाकारः साक्षिलेख्यादिः तस्मिन्कृते[5] पण्ये स्ववशतामनानीते[6] अव-ध्यन्तरे[7] परावर्त्य दत्तेऽपि[8] न क्रेतुर्दशमभागहानिः[9] । प्रकाशदोषस्तु[10] नावध्युत्तरं परावर्त्तनीयमित्यर्थः । (११) यत्तु[11] सदोषमेवात्यन्तं तच्च[12] दोषं-संगोप्य छलेन विक्रीतं[13] तत्पश्चादपि[14] व्याघुष्य[15] देयम् ॥

(१२) तथा च बृहस्पतिः[16]:—

ज्ञात्वा सदोषं यः पण्यं विक्रीणात्यविचक्षणः ।

तदेव द्विगुणन्दाप्यस्तत्समं विनयं तथा ॥

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।

अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥

तस्य क्रेतुस्त्याज्यं त्यागार्हं पुनर्हरेत विक्रेता ।

(१३) तथा[17]—

अन्यहस्तेन[18] विक्रीय योऽन्यहस्ते[19] प्रयच्छति ।

---

१ च मूल्याद्दशमभागं तु । २ क स्ववशतामानीते तु । ३ छ अप्राप्तार्थे । ४ च ऽनुशये । ५ ग । च + छ कृतेपि । ६ क मानीते । ७ ग + छ + च — अवध्यभ्यन्तरे । ८ ख + छ परावर्त्य दत्ते न क्रेतु । ९ ग — दशभाग । १० ग — प्रकाशदोष-कस्य । घ — प्रकाशदोषन्तु । च प्रकाशदोषकस्य तु नावध्युत्तरं परावर्त्तनमित्यर्थः। ११ ख बहूा। १२ ग यत्तु सदोषमेव तच्च दोषं । १३ च क्रीतं । १४ ख । ग तत्परादपि । १५ ग — व्या-घुष्य । १६ च तथा बृहस्पतिः । १७ ख । ग — तथान्यहस्ते विक्रीय । १८ च + छ — अन्य हस्ते तु । १९ छ अन्यस्मै यः प्रयच्छति ।

सोऽपि तद्द्विगुणन्दाप्यो विनयं तावदेव तु ॥

अन्योत्रातदीयोऽनत्प्रयुक्त इति यावत् ॥

(१३) अन्यत्र मूल्यसंवादं कृत्वा अन्यत्र विक्रये अयं दण्ड इति रत्नाकरः ।

(१४) तथा----

दीयमानं न गृह्णाति क्रीत्वा पण्यं तु यः क्रयी ।

विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

(१५) याज्ञवल्क्य :—

विक्रीतमपि विक्रेयं पूर्वक्रेतर्य्यगृह्णति ।

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥

(१६) तथा—

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ।

(१७) स्वपण्यं विक्रेतव्यत्वेनाभ्युपेत्य विक्रेत्रा क्रेतृदत्तं यद्धनं गृहीतं तत् सत्यङ्कारकृतं तच्च विक्रये विमतेन तेन द्विगुणं क्रेतरि देयमित्यर्थः ।

(१८) नारद :—

लाभार्थं बणिजां सर्वपण्येषु क्रयविक्रयः ।

स च लाभोऽर्थमासाद्य महान् भवति वा न वा ॥

तस्माद्देशे च काले च प्रक्रमेतार्थविद्वणिक् ।

न जिह्मेन प्रवर्त्तेत श्रेयानेवं बणिक्पथः ॥

पूर्वोक्तक्रये दशाहवचनं सर्ववीजेष्वेव ।

(१९) तथाच व्यासनारदौ—

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।

वस्त्रकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥

---

१ छ—मूल्यं । २ च—विक्रेयत्वेन । ३ च लाभार्थं । ४ च । छ—लाभोऽर्घं । ५ च—प्रक्रमेतार्घं । छ—विक्रये चार्थं । ६ छ जैह्मये न । ७ च—काष्ठेष्टिका ।

त्र्यहाद्दोह्यं[1] परीक्षेत पञ्चाहाद्वाह्यमेव च।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्द्धमासन्तु पुंसां[2] तद्द्विगुणं स्त्रियाम्[3]।
दशाहः[4] सर्व्ववीजानामेकाहो लौहवाससाम् ॥

(२०) याज्ञवल्क्य :—
दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्।
बीजायोवाह्यरत्नस्त्रो दोह्यपुंसां परीक्षणम् ॥

(२१) एवमेवोक्तं बृहस्पतिना—
अतोर्वाक्[5] पण्यदोषस्तु यदि संजायते क्वचित्।
विक्रेतुः प्रतिदेयन्तत् क्रेता मूल्यमवाप्नुयात् ॥
दुष्टमप्यर्वागेव देयम्।

(२२) अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम्।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥
काले परीक्षाकालाभ्यन्तरे। अन्यथा तदूर्द्ध्वं नेत्यर्थः।

(२३) क्रेतृभिर्ज्ञातदोषे तु वस्तुमात्रे नारद :—
परिभुक्तन्तु यद्वासः क्लिष्टरूपं मलीमसम्।
सदोषमपि तत्क्रीतं विक्रेतुर्न[6] भवेत्ततः ॥

(२४) एतदपि सर्वं[7] कालनियमनमपरीक्ष्य गृहीते।

(२५) तथा च याज्ञवल्क्य :—
क्षयं वृद्धिं च वणिजां पण्यानामभिजानता[8]।
क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदण्डभाक् ॥

---

१ छ – परीक्ष्येत। २ च – पुंसां तु द्विगुणं स्त्रियः। ३ ग + छ – स्त्रियाः। ४ च दशाहं। ५ च – ततो। ६ च + छ – भवेत्पुनः। ७ च + छ एतत्सर्वं। ८ च – अभिजानताम्।

(२६) नारदोऽपि—

क्रीत्वा नानुशयं कुर्याद्वणिक् पण्यविचक्षणः ।
क्षयं वृद्धिं च जानीयात्पण्यानां यस्य याद्दशी[1] ॥
क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभि[2]मतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

(२७) बृहस्पति[3]रपि

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं गृहीतं न पुनस्त्यजेत् ॥
उक्तकालादर्वागपि दाने[4] विशेषमाह

(२८) नारद :—

क्रीत्वा मूल्येन यो[5] द्रव्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्[6] तस्मिन्नेवाह्नयवे[7]क्षितम् ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यं[8] त्रिंशांशमाहरेत् ।
द्विगुणं[9] तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥

(२९) यस्य त्र्यहः पर्यन्तमेव परीक्षणं तत्रेदम् ।

(३०) कात्यायनोपि दोषादौ विशेषमाह—

क्रीत्वाचानुशयात्पण्यं त्यजेद्दोषादि यो नरः ।
अदुष्टमेव काले तु स मूल्याद्दशमं हरेत्[10] ॥
काले तु उक्तार्पणकाल इत्यर्थः ।

---

१ च—याद्दशीम् । २ च । छ परीक्षाभि । ३ च बृहस्पतिः । ४ च द्रव्यदाने । ५ ख यद्द्रव्यं । ६ ग । च- देयं तु । ७ च । छ—वाह्निवीक्षितम् । ८ ग । च + छ मूल्यात् त्रिंशांम्ः । ९ ख द्वितीयन्तु । १० क वहेत ।

(३१) इदन्तु वाक्यं यद्वस्तु क्रेत्रा न स्ववशीकृतं तत्परम् । स्ववशीकृतपरं भविष्यद्वाक्यमतो न विरोधः ।

(३२) क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागतम् ।
षड्भागन्तत्र मूल्यस्य दत्वा क्रीतं त्यजेद्भृगुः ॥

(३३) दोषमाच्छाद्य यदा विक्रीतं तदा बहुनापि कालेन परावर्त्यं दातुं शक्यत एव ।

(३४) तदाह मनुः—
नान्यदन्येन संसृष्टं रूपं विक्रयमर्हति ।
न सावद्यं न च न्यूनं न दूरे न तिरोहितम् ॥
अन्यत्कुंकुमादि । अन्येन कुसुम्भादिना । सावद्यं कुक्कुरादिलीढम् । दूरे स्वतोऽज्ञाततत्त्वम् । तिरोहितं वस्त्रादिना ।

(३५) एतच्च सर्वमेव ज्ञातं चिरेणापि परावर्त्यमिति भावः । *

--

## अथ सीमाविवादः ॥१०॥

(१) तत्र मनुः—
सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।
ज्येष्ठे मासि नयेदेनां सप्रकाशेषु सेतुषु ॥
सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।

---

१ क वाक्यपरमतो । २ च यद्विकृतं । ३ च तद्बहुनापि । ४ च । छ संसृष्टरूपं । ५ च + दूरे पणायति अतोऽज्ञातत्वम् । * च कुरुते तदाहरणं भाग्याभाग्यवशान्नृणाम् तत्र विचारणा (इत्यधिकः पाठः) । ६ च छप्रकाशेषु । ७ ग सेतुरत्र क्षेत्राणामेव । सीमावृक्षांस्तु ।

शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च विविधाञ्छमीवल्लीस्थलानि च ।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासन्धिषु कार्याणि देवतायतनानि च ॥
भूमिच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य लोके नित्यं विपर्ययम् ॥
अश्मनोऽस्थीनि गोबालांस्तथा भस्मकपालिकाः ।
करीषमिष्टकाङ्गाराञ्छर्करा वालुकाश्च ह ॥
यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥
वृक्षादावप्युपलक्षणमेव ।
एतैर्लिङ्गैर्नयेत्सीमां राजा विवदतां नृणाम् ।
पूर्वभुक्त्या च सततमुदकस्यागमेन वा ॥

(२) बृहस्पति[३] :—
वापीकूपतडागादि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतः शरगुल्माश्मराशयः ॥
यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्याद्विवादे सीमनिश्चयः[५] ॥

तथा—

(३) साक्ष्यभावे च चत्वारो ग्रामसीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥

---

१ छ यथा। २ घ लक्षणत्वमेव । ३ ग निम्नप्रदेशेनेत्यर्थः । बृहस्पतिः । ४ च = सीम्नि ।
५ ग + च ग्रामाःसीमान्तवासिनः ।

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधान् शाकुनिकान्गोपान् कैवर्त्तान्मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तोनन्यांश्च वनगोचरान् ॥
ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥

(४) निगदरीतिमाह स एव—

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विनो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्ब्रूयुस्ते तु समंजसम् ॥
सुकृतैरिति मृषाभिधाने मम सुकृतं नश्यत्विति । समंजसं सत्यम् ।

(५) तथा—

ते पृष्टास्तु यथा ब्रूयुः सामन्ताः सीमनिर्णयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥

(६) नारदः—

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥
एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्द्धनि ॥
सोपवासत्वमत्राधिकम् ।

(७) बृहस्पतिः—

ज्ञातृचिह्नविनाशे तु एकोऽप्युभयसम्मतः ।
ज्ञातॄणां चिह्नानाञ्चेत्यर्थः ।

---

१ ग = तत्पृष्टास्तु । २ ग - समस्ताः ।

(८) कात्यायन :

कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।
त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मूलादिभिः सह ॥
संमन्त्र्य कारयेत्सीमामेवं धर्मविदो विदुः ।

सामन्ताः सीमाप्रभवाः ।

(९) मनु :—

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ।
सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ॥

सेतौ सीमासेतौ ।

(१०) कात्यायन :—

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य च ॥

(११) समन्तात्परिरभ्येति । यः परितो वेष्टयित्वा स्थितश्चतुर्दिक्षु ग्रामादेः स एव तत्सीमा साक्षी । एवं क्षेत्रगृहयोरपीत्यर्थः ।

(१२) ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः सम्प्रकीर्त्तिताः ॥

(१३) नारद :—

यदा तु न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

---

१ छ = गत्वा । २ च = मौलादिभिः । ३ ग + च + छ = सम्मिश्र्य । ४ छ = परिकीर्त्तिताः । ५ ग + च + छ = सीमायान्नच । ६ छ = समम् ।

(१४) बृहस्पति :—

अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही ।
महानद्याथवा राज्ञा कथं तत्र विचारणा ॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥
[illegible]। जीवनं च दैवराजवशान्नृणाम् ।
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥
ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
क्षयोदयेन चाल्यासौ चालयन्दण्डमर्हति ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ।
नदीतीरे प्रकुरुते तस्य तान्न विचालयेत् ॥

(१५) कूलपातक्रमेण या भूः सोत्तरस्वामिन एवेत्यर्थः ।

(१६) क्षेत्रं [illegible]ल्लङ्घ्य भूमिच्छन्ना यदा भवेत् ।
नदीस्रोतः प्रभावेण पूर्वस्वामी लभेत ताम् ॥

(१७) क्षेत्रोल्लङ्घनेन नदीसञ्चारेऽपि लङ्घिता भूः पूर्वस्वामिन एव निष्ठतीत्यर्थः

(१८) या राज्ञा क्रोधलोभेन [illegible]ायेन वा हृता ।
प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमाणरहितेऽप्यर्थे भुञ्जतो यस्य या हृता ।
गुणाधिकाय वा दत्ता तस्य तान्न विचालये[illegible] ॥

(१९) क्रोधादिना हृतापि राज्ञा सीमा निवर्त्त्या अन्या तु रक्षणीयेत्यर्थः ।

---

१ च - दैवराजत । २ ग विचारयेत् । ३ च - कल्पिका नदी । ४ च—चाल्यासा । ५ - ग + च + छ - भूमिश्छिन्नो । ६ ख + ग । छ - प्रवाहेण । ७ च । छ - वा हृता । ८ ख + ग + च - अन्या तु तत्कृता रक्षणीयेत्यर्थः ।

(२०) **याज्ञवल्क्य :—**

**आरामायतनग्रामनिपानोद्यानवेश्मसु ।**
**एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥**

(२१) **मनु :—**

**वापीकूपतडागानामारामस्य गृहस्य च ।**
**सामन्तप्रत्ययो ज्ञेयः सीमासन्धिषु निर्णयः ॥**

(२२) **बृहस्पति :—**

**निवेशकालादारभ्य गृहवार्योपणादिकम् ।**
**येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥**
**वातायनाः प्रणाल्यश्च तथा निर्व्यूहवेदिकाः ।**
**चतुःशालस्यन्दनिकाः प्राङ्निविष्टा न चालयेत् ॥**

प्रणाली जलमार्गः । निर्व्यूहवेदिका नागदन्तवेदिका । चतुःशालं चतुर्द्वारं गृहम् । स्यन्दनिका पटलप्रान्तः । ओहारीति प्रसिद्धा ।

(२३) **कात्यायन :—**

**मेखलाभ्रमनिष्काशगवाक्षान्नोपरोधयेत् ।**
**प्रणालीं गृहवास्तुश्च पीडयन् दण्डभाग्भवेत् ॥**
**निवेशसमयादूर्ध्वन्नैते योज्याः कदाचन ।**
**दृष्टिपातं प्रणालीश्च न कुर्यात्परवेश्मसु ॥**

मेखला गृहादिमूलबन्धः । भ्रमो जलनिर्गमः । निष्काशो निस्सरणपथः । नोपरोधयेत् न निरुन्ध्यात् । दृष्टिपातो गवाक्षः ।

---

१ ग + च + छ – क्षेत्र । २ च – निष्कर । छ – निर्यूह । ३ च – चतुः शालं । ४ च + छ – प्राङ् निर्दिष्टां न चालयेत् । ५ छ – नागदन्तवेदिका निर्यूहवेदिका । च – निष्करवेदिका । ६ च – गृहपटलप्रान्तः । ७ छ – ओहालीति । च – तुहारी । ८ छ – कथञ्चन । ९ छ – वेश्मनि । १० ग + च – मेखला मलबन्धः । ११ छ – जलनिर्गमः । १२ छ – न रुन्ध्यात् ।

(२४) बृहस्पति :—

वर्चस्थानं वह्निचयं गर्तोच्छिष्टानुसेचनम् ।
अत्यारात्परकुड्यस्य कर्त्तव्यन्न कदाचन ॥

वर्चस्थानं विण्मूत्रोत्सर्गस्थानम् । अत्याराद‌तिसमीपे ।

(२५) कात्यायन :—

विण्मूत्रोदकचक्रञ्च वह्निश्वभ्रे निवेशयन् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

चक्रन्तैलादियन्त्रम ।

(२६) बृहस्पति :—

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

(२७) कात्यायन :—

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पञ्च संजातं क्षेत्रस्वामिषु निर्दिशेत् ॥
द्वयोः क्षेत्रयोस्स्वामिषु ।
अन्यक्षेत्रेषु जातानां शाखाश्चान्यत्र संस्थिताः ।
स्वामिनन्तद्विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥
शाखा इतिशेषः ।

(२८) मनु :—

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

---

१ क – युक्तं । २ च – गर्तोच्छिष्टान्नसेचनम् । ३ ग + च । छ – निवेशनम् । ४ घ – नचा दुष्यन्तु । ५ छ – केनच । ६ ग – यन्न ।

आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

मा पुनरेवं कार्षीरित्यादि[१]दण्डशून्यं वाक्यम् ।

(२९) विष्णुः—

पथ्युद्यानोदकसमीपेष्वशुच्युत्करादित्यागे पणशतं तच्च प्रास्येत् ।

व्युत्करोऽवकरः गोन्द[२] उड इति प्रसिद्धः । (३०) एवञ्च मूत्रपुरीषावष्करादिकं जलसमीपराजमार्गादौ कुर्वाणः पणशतं दण्ड्यः । (३१) यत्तु मनुना "कार्षापणद्वयं दण्ड्यः" इत्युक्तं तदनतिशयित[३]सामर्थ्यादिनाऽतो न विरोधः । तत्समं प्रास्येत् प्रोञ्छयेत्[४] ।

(३२) कात्यायनः—

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥

(३३) उपहन्तृद्वारा तदमेध्यं शोधयित्वा तं सार्द्धपणशतद्वयन्दण्डयेत् । इदमसकृदुपघाताचरणे ।

(३४) मनुः—

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः ॥

(३५) गृहादिस्वामिनां भयमुत्पाद्य तद्गृहादिहरणे[५] पञ्चपणशतानि दण्ड्यः । स्वामित्वभ्रमेण[६] हरन् द्विशतमित्यर्थः ।

---

१ क कार्षीदित्यादि । २ ख गोविन्दतल । च+छ गोन्दतल । ३ ग+च तदनतिशयितमलत्यागेऽस्तोन विरोधः । ४ छ तन्मलं । ख+च तत्तु मलं प्रास्येत् । ५ च हरणे । ग+छ हरन् । ६ ग+च+छ=स्वामिभ्रमेण तु ।

(३६) बृहस्पति :—

स्थापिताञ्चैव मर्य्यादामुभयोर्ग्रामयोस्तथा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥
मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्ड्यो मध्यमोत्तमसाहसम् ॥

मर्यादा सीमावृक्षादिः ।

(३७) शंख :—

क्षेत्रमर्यादाभेदे तु शतम् । सीमाव्यतिक्रमे सहस्रम् ।
क्षेत्रोदकहरणेऽष्टशतम् ।

अष्टभिरधिकं शतं सहस्रञ्च । क्षेत्रोदकं क्षेत्रनिर्वाहकमुदकम् ।

(३८) नारद :—

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिद्ध्यते ।
महागुणोल्पबाधश्चेद्वृद्धिरिष्टाक्षये सति ॥

(३९) येन सेतुना बहुतर उपकारः क्षेत्रस्वामिनश्चाल्पपीडा स क्षेत्रिणो न निवारणीय इत्यर्थः ।

(४०) याज्ञवल्क्य :—

स्वामिने अनिवेद्यैव क्षेत्रसेतुं प्रवर्त्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

---

१ च + छ बृद्धमनुः २ छ सीमाया क्रमणे । ३ च + छ दण्ड्या । ४ ग मर्यादा सेत्वादिः । छ मर्यादासेत्वादिः सीमावृक्षादिः । ५ ग + च + छ भेदेऽष्टशतम् । ६ ग + च + छ सीमाव्यतिक्रमेऽष्टसहस्रम् । ७ ग महान्गुणोल्प । ८ ग बहुरुपकारः ९ च वाल्पा पीडा । १० ग + च क्षेत्रे । ११ ग + च स्वामिनो भागः ।

(४१) क्षेत्रस्वाम्यनुमतिमनादाय तत्क्षेत्रे कृतस्य सेतोर्महिम्ना यः परेषां सस्याधिगमस्तत्र सेतुकर्ता न भागी[1] किन्तु क्षेत्रस्वामी तदभावे राजेत्यर्थः।

---

## अथ कृष्टाऽकृष्टे।

(४२) तत्र नारदः—

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
क्षेत्रञ्चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम्॥

अशक्तो द्रव्यरहितः। नष्टः त्यक्तदेशः। स कर्षकः।
क्षेत्रं[4] खिलीभूतमित्यर्थः।

विकृष्यमाण[5]क्षेत्रेषु क्षेत्रिकः पुनराव्रजेत्॥
खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात्॥
खिलोपचारं खिलकर्षणव्ययायासनिष्क्रयम्।

(४३) कात्यायन :—

अशक्तितो न दद्याच्चेत्खिलार्थे यः कृतो व्ययः।
तदष्टभागहीनन्तु कर्षकः फलमाप्नुयात्॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिनो हि तत्।

(४४) क्षेत्रस्याष्टममंशं क्षेत्रस्वामी लभेत तदष्टांशान्[6] कर्षकः। अष्टवर्षाण्येवं ततस्तु खिलोपचारमदत्वैव[7] स्वामी क्षेत्रं लभते[8]। अतिकृच्छ्रकर्षणीयखिलभूमिविषयमेतत्[9]।

---

१ छ न भोगी। २ ग। च+छ तदभावे तु। ३ च कश्चिदाप्नुवीत। ४ ग क्षेत्रे मित्यर्थः। ५ ग निष्कृष्य। ६ ख+ग। च+छ सप्तांशान् कर्षकः। ७ ख तत्खिलोपचार। ८ छ लभेत्। ९ च+छ विषयकमेतत्।

(४५) सम्वत्सरेणार्द्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं च क्षेत्रं स्यादटवीसमम् ॥

एकवर्षपतितमर्द्धखिलं त्रिवर्षपतितं खिलं पञ्चवर्षपतितमरण्यं सं भवतीत्यर्थः ।

(४६) बृहस्पति :—

गृहीत्वा वाहयेत्काले वापगोपनसंग्रहान् ।
अकुर्वन् स्वामिने दाप्यो मध्यकृष्टसदस्तु सः ॥[1]

सदः सस्यम । मध्य उत्पत्तेरित्यर्थः ।[2]

(४७) व्यास :—

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने[3] च समं दाप्यो राज्ञे दण्डञ्च तत्समम् ॥

यत्र क्षेत्रे यद्देयं तदाह[4]—

चिरावसन्ने दशमं कृष्यमाणे तथाष्टमम् ।
स्वसंस्कृते[5] तु षष्ठं स्यात्परिकल्प्य यथास्थिति ॥

(४८) एतत्सर्वं मध्योत्पत्तौ[6] बृहस्पतिवाक्यात्[7] । तेनारण्यसमे मध्योत्पत्तेर्दशमं खिलेऽष्टमं सर्वखिले[8] षष्ठं भागं क्षेत्रमङ्गीकृत्य पातयित्वा क्षेत्रिणे अङ्गीकर्त्ता दाप्य इत्यर्थः ।

क्षेत्र्यननुमत्या क्षेत्रवापे मनु :—

(४९) ये क्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः[9] ।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥

१ क सदन्तु सः । २ छ उत्पत्तेरितिशेषः । ३ ग स्वामिनैव । च । छ = स मदं दाप्यो । ४ च तत्राह । ५ ङ असंस्कृते तु । ६ छ मध्योत्पत्तेः । ७ च वचनात् । ८ ख + ग अर्द्धखिलेऽष्टभागं । च + छ अर्द्धखिलषष्ठं भागं । ९ ग प्रवापकाः ।

ओघवाताहृतं[1] बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव[2] तद्बीजं न बीजी लभते फलम् ॥

तथा—

अबीजविक्रयी चैव बीजोत्कृष्टा[4] तथैव च ।
मर्यादाभेदकश्चैव प्राप्नुयाद्विकृतं[5] वधम् ॥

## अथ सस्यरक्षा ।

(५०) तत्र याज्ञवल्क्य :—

ग्रामेच्छया[6] गोप्रचारो भूमी राजवशेन वा ।
धनुश्शतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ॥
द्वे शते कर्वटस्य[7] स्यान्नगरस्य चतुःशतम् ।

कर्वटो[8] ग्रामादुत्कृष्टो नगरादधमः धनुश्चतुर्हस्तोदण्डः । ग्रामिणामिच्छया[9] भूम्यनुसारेण वा राजाज्ञया वा पशुप्रचरणाय[10] ग्रामादिकमभितो[11] भूस्त्याज्या सा च ग्रामे हस्तचतुःशतमिता महाग्रामात्[12] द्विगुणा नगरे चतुर्गुणेत्यर्थः ।

(५१) मनु :—

धनुःशतं परीणाहो ग्रामस्य स्यात्समन्ततः ।
सम्पातास्तु[13] त्रयो वापि त्रिगुणा[14] नगरस्य तु ॥

नगरस्य नगरकल्पस्य । संपाताः काण्डपाताः ।

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

---

१ च - हृतं बीजं । २ ग - क्षेत्रिकस्य च । ३ च न वसा । ४ छ कर्षी ५ ग - द्विशतं दमम् - छ - विकृतं फलम् । ६ क ग्रामे तु यागोप्रचारो । ७ छ खर्वटस्य । ८ छ खर्वटो । ९ च - ग्रामीणानामिच्छया वा । १० छ = पशुवारणाय । ११ ग - ग्रामादतिक्रम्य भूस्त्यक्त्वा । १२ ख + ग + छ = महाग्रामे । च - महाग्रामे तद्द्विगुणा नगरे तच्चतुर्गुणा । १३ ग - सम्पातास्तत्र । १४ च = त्रिगुण । छ = त्रिगुणो ।

(५२) तत्र ग्रामपरीणाहाभ्यन्तरं विष्णु :—

**पथि [१] ग्रामे विवीतान्ते न दोषो नावृते चाल्प[२]कालम् ।**

भक्षणे सतीति शेषः । (५३) वर्त्मग्रामपरीणाहानां समीपे यत्क्षेत्रमनावृतं तस्याल्पकालं गवादिना भक्षणे पालदोषो नास्ति । बहुकालभक्षणे[३] तत्रापि-दोष आशया[४]पराधात् ।

(५४) **तथा च याज्ञवल्क्य :—**

**पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।**
**अकामतः कामचारे चौरवद्दण्डमर्हति ॥**

विवीतं गवादिचरणस्थानम् ।

**[५] क्षेत्रेष्वन्येषु तु [६] पशुः सपादं पणमर्हति ।**
**सर्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा ॥**

अन्येषु दूरस्थेषु । पशुविशेषे दण्डविशेषः ।

(५५) **तत्र शंखलिखितौ—**

**रात्रौ चरन्ती गौः पञ्च माषान् । दिवा त्रीन् । मुहूर्त्त-[७]माषान् ग्रामे[८]त्वदण्डः ।**

(५६) माषश्चयंराजतः -

**सौवर्णैर्माषिकैः संख्या दण्डकर्मसु शस्यते ।**
**पशूनां सस्यचरणे माषैरन्यैस्तु राजतैः ॥**

इतिभाष्यकारवचनात् । (५७) माषश्चायं राजतः कृष्णलद्वयात्मा ।

**"द्वेकृष्णले समधृते विज्ञेयो रूप्यमाषकः"**

इति[९]वचनात् । रात्रौ चरन्ती यावत्सौहित्यं पञ्चमाषान् दिवा तु यावत्सौहित्यं

---

१ च + छ = पथिग्राम । २ घ - वाल्यकालम् । ३ ग = बहुकालभक्षणे दोषः । ४ ग = स्वाम-यनापराधात् । ५ ख + ग + छ मनुः क्षेत्रेष्वन्येषु । ६ ग - क्षेत्रेष्वन्येषु तु दण्डः । ७ च + छ – महूर्त्ते माषम् । ८ – ग्रामेत्वदण्डाः । ९ छ इतिमनुः ।

चरन्ती त्रीन् । क्षणं दिवा चरन्ती माषम् । ग्रामसमीपे तु चरन्ती न दण्ड्येत्यर्थः तद्दण्डस्तत्स्वामिन एव पशोरदण्ड्यत्वात् ।[1]

(५८) कात्यायन :—

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा ।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः ॥

पणोऽत्र कार्षापणः ।

(५९) गौतम :—

पञ्च माषान् गवि । षडुष्ट्रे । अश्वमहिष्योर्दश ।[2]
अजाविके द्वौ द्वौ ।

(६०) शंखलिखितौ—

सर्वेषामेव वत्सानाम्माषम् ।

(६१) नारद :—

सन्नानां द्विगुणो दण्डो वसतान्तु चतुर्गुणः ।
प्रत्यक्षचारकाणां तु चौरदण्डः स्मृतो बुधैः ॥

सन्नानां[3] सस्यभक्षणेन श्रान्तानाम् । वसतान्तत्रैव चरित्वा नीतरात्रिका[4]णाम् । प्रत्यक्षचारकाः क्षेत्रस्वामिनि पश्यत्येव बलेन चारकाः ।

(६२) नारद :—

समूलसस्यनाशे तु तत्स्वामी सद्[5]माप्नुयात् ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥

वधोऽत्र ताडनम् ।

(६३) विष्णु :—

सर्वत्र स्वामिने विनष्टसस्यमूल्यं च सपालेन विपाले[6]न वा ।

पशुना सस्य चरणे पशुस्वामी[7] विनष्टसस्यमूल्यं राज्ञे च दण्डन्दाप्य इत्यर्थः ।

---

१ घ + च + छ - दण्डस्तु । २ च - महिषयोर्दश । ३ च - सत्वानां सस्यभक्षणे भ्रान्तानाम् ।
४ च = रात्रिकालानाम । ५ च - सस्यमाप्नुयात् । ६ छ - विना पालेन वा ।
७ ग + च + छ - पशुस्वामी क्षेत्रिणे ।

(६४) नारद :—

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम्॥
गवत्रं गोमिना देयं धान्यं वै कर्षकाय च।
एवं हि विनयः प्रोक्तो गवां सस्यावमर्द्दने॥

गवत्रं धान्यस्तम्बः। गोमी गोस्वामी तेन गवत्रं धान्यं वा क्षेत्रिणे देय मित्यर्थः। ग्राह्यमप्येतन्नकरहेतुत्वान्न ग्राह्यम्।

(६५) तथाचोशना—

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः॥

पालाधिष्ठानकाले पालस्य दण्डः नोचेत्स्वामिन एव। तत्रैव दिग्दर्शनम्।

(६६) विष्णु :—

अपालकायास्तत्स्वामी सपालायास्तु पालकः।

(६७) तत्रापवादमाह नारद :—

राजग्राहगृहीतो वा वज्राशनिहतोऽपि वा।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत्॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमतः॥

(६८) याज्ञवल्क्य :—

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः॥

महोक्षो बीजसेक्ता वृषभः। उत्सृष्टास्तु देवतोद्देशेन पशवः। सूतिका नव-

१ छ नाशितम्। २ ग गवत्रं स्वामिना। ३ घ तथाह्योशना। ४ छ उत्सृष्टस्तु देवतोद्देशेन।

प्रसूता। आगन्तुका ग्रामान्तरादागता स्वयूथपरिभ्रष्टा वा। पालो येषां न विद्यत इत्यर्थः। (६९) तेनापालाः सेनादिदर्शनाद्गर्जादिश्रवणाद्वा पलायिताः पशवो यदि क्षेत्रं चरन्ति तदा न दोष इत्यर्थः।

(७०) मनु :—

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा।
सपालान्[२] गतपालान्वा अदण्ड्यान्मनुरब्रवीत्॥

वृषान् बीजसेक्तॄन्॥

(७१) उशना—

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः[३]।
अदण्ड्याः काणकुण्ठाश्च वृषश्च कृतलक्षणः॥
अदण्ड्याऽऽगन्तुका या गौः सूतिका व्यभिचारिणी।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च॥

अश्वा राजकीयास्तेषामेव प्रजापालकत्वात्। (७२) यत्त्वश्वमहिष्योर्दशेति गौतमेनोक्तं तद्गुणिगाश्वविषयकमतो न विरोधः। कुण्ठः[४] खञ्जः। अत्र काणकुण्ठ[५]शब्दाभ्यामत्यन्ताक्षम उच्यते। कृतलक्षणः शूलाद्यङ्कितः। व्यभिचारिणी अत्यन्तधावनशीला। **परिजाते तु अभिसा[ ]णीति** पठित्वा वृषस्यन्तीति विवृतम्।

(७३) शंखः—

क्षुद्रपशवोऽरण्याः[६] अश्वतरः[ ]वाजिनः।
अरण्योऽशक्य[७] निवारणः। अश्वतरो वत्सतरीति[८] प्रसिद्धः।

(७४) कात्यायन :—

अधमोत्तममध्यानं पशूनाञ्चैव ताडने।

---

१ छ = तस्य। २ च = सपालाम्वा विपालाम्वा। ३ ग = मताः। ४ ग — कुब्जः। ५ ग = कुब्ज। ६ ख + घ — अशक्या। ग + छ अवश्या। ७ घ — अशक्यो। ग + छ — अवश्यो। ८ छ = वेसवीति प्रसिद्धः।

स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥

ताडकस्येति शेषः ।

(७८) अस्यापवादमाह स एव—

क्षेत्रारामविवीतेषु गृहेषु पशुवाजिषु[1] ।

ग्रहणन्तत्प्रविष्टानां ताडनञ्च बृहस्पतिः ॥

गृहादिप्रविष्टेषु पशुषु ताडनधारणयोर्न दोष इत्यर्थः ।

---

## अथ वाक्पारुष्यम् ॥११॥

(१) तत्र नारदः—

देशजातिकुलादीनामाक्रोशन्यङ्कुसंयुतम् ।

यद्वचः प्रतिकूलार्थं वाक्पारुष्यन्तदुच्यते ॥

आक्रोश उच्चैर्भाषणम्, न्यङ्कु अवद्यं ताभ्यां संयुतं यत्प्रतिकूलार्थं यद्वचस्तद्वाक्पारुष्यमिति सामान्यलक्षणम् । मिताक्षराप्येवम्[2] । (२) अन्यत्तु सकलमपि व्याख्यानमयुक्तम् । सामान्यलक्षणाक्षमत्वात्[3] ।

(३) निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्[4] ।

गौरवानुक्रमात्तेषां दण्डोऽप्युक्तः क्रमाद्गुरुः ॥

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्कुसंज्ञितम् ।

पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः[5] ॥

न्यङ्कुसंज्ञितं मेहनाद्युल्लेखवत् ।

---

१ च + छ – पशुराजिषु । २ ङ – मिताक्षरादयोऽप्येवम् । ३ च – अश्लीलादेः प्रतिकूलार्थत्वास म्भवेन सामान्यलक्षणाक्षमत्वात् । ४ च – तथा । निष्ठुरा । ५ ग + च – तापनीयैः ।

(४) बृहस्पति :—

अप्रियोक्तिस्ताडनञ्च पारुष्यं द्विविधं स्मृतम् ।
एकैकन्तु त्रिधा भिन्नं दण्डश्चोक्तस्त्रिलक्षणः ॥
देशकालकुलादीनां क्षेपः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यन्तदुच्यते ॥
भगिनीमातृसम्बन्धमुपपातकसंशनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रमर्माभिघट्टनम् ॥

द्रव्यं विना पदार्थं विना तेनाऽसत्यम् । (५) इदंतु सर्वान्वयि । तेनाऽसत्यं पापाभिधानं प्रथमम् । असत्यमुपपातकाभिधानं द्वितीयम् । असत्यं महापातकाभिधानमुत्तमं वाक्पारुष्यमित्यर्थः ।

(६) समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु सः ।
उत्तमस्याऽर्द्धिकः प्रोक्तो वाक्पारुष्ये परस्परम् ॥

(७) याज्ञवल्क्य :—

अर्धोऽधमेषु द्विगुणं परस्त्रीषूत्तमेषु च ।

अर्द्धता चापराधानुरूपा दण्डस्य । अधमतो वर्णतो गुणतश्च ।

(८) कात्यायनोशनसौ—

मोहात्प्रमादात्संहर्षात्प्रीत्या चोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत् ॥

(९) बृहस्पति :—

समजातिगुणानान्तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिमतः शास्त्रे पणास्त्वर्द्धत्रयोदश ॥

---

१ छ—तीव्रं । २ छ असत्य । ३ च : छ महापातकाभिशंसने । ४क—द्विगुणं तु सः । ५ ख + छ—द्विगुणः । ६ ङ + च + छ अधमता । ७ ख + ग + छ—विनयोऽभिहित । ८ च—पणा अर्द्ध ।

वाक्पारुष्ये योऽवधिभूतो दण्डो यस्य[1] हीनेऽर्धं उत्तमे हि द्विगुणता[2] ।

(१०) तमाह बृहस्पतिः—

सवर्णाऽऽक्रोशने सार्द्धद्वादशपणो[3] दण्डः ।

हीनवर्णे[4] षट्पणो दण्डः । काणखञ्जादीनां तथा ।

(११) याज्ञवल्क्यः—

अभिगन्तासि[5] भगिनीं मातरं[6] यभयेदिह ।

पणन्[7]तद्दापयेद्राजा पञ्चविंशतिकं दमम् ॥

(१२) मनुः—

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।

वैश्योऽध्यर्द्धशतं द्वेधा[8] शूद्रस्तु बधमर्हति ॥

अध्यर्धं सार्धम् । बधस्ताडनम् ।

(१३) विप्रः पञ्चशतं[9] दण्ड्यः क्षत्रियस्याभिसंशने ।

वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥

वैश्ये शूद्रे अभिसंशनीये ।

(१४) ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्यो विजानता ।

ब्राह्मणे साहसः पूर्वः क्षत्रिये चैव मध्यमः ॥

इदं[10] ब्राह्मणक्षत्रिययोः परस्परं पतनीयाक्रोशे विट्छूद्रयोरेवमेव ।

(१५) शूद्रानुवृत्तौ बृहस्पतिः—

धर्मोपदेशकर्त्ता च वेदोदाहरणान्वितः ।

विक्रोशकस्तु[11] विप्राणां जिह्वाच्छेदेन[12] दण्ड्यते ॥

---

१ च + छ – तस्य हीने । २ च – उत्तमे द्विगुणतामाह । ३ च – द्वादशपणा दण्डः । ४ ग – हीनवर्णाक्रोशने । च – हीनवर्णाक्रोशने षट्पणा दण्डः । छ – हीनवर्णे काकिण्यधिक । ५ च – अभिगन्तास्मि भगिनीं । ६ च – मातरं वा तवेति ह । ७ च – पणं तु दापयेद्राजा । ८ च – द्वेवा । ९ च – पञ्चाशतं । १० ग – इदं क्षत्रिय ब्राह्मणयोः परस्परं पीडनीयाक्रोशे । ११ ग + च – आक्रोशकस्तु । १२ छ – छेदात् ।

एकजातिर्द्विजातिं[1] तु वाचा दारुणया क्षिपन् ।
जिह्वायाश्छेदमाप्नोति जघन्यप्रभवो हि सः ॥
नामजातिग्रहन्त्वेषां अति[2]द्रोहेन कुर्वतः ।
निधेयोऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥
धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥

द्विजातिं त्रैवर्णिकं दारुणया पातकस्या[3]भिसंशनरूपयेति कल्पतरुः ।

(१६) द्विजानां कृते वा गौतम :—

शूद्रो द्विजातीनभिसन्धाय निहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्यो येनापहन्यात् तेनाक्रोशे जिह्वाच्छेदः अङ्गताडने सत्यङ्गं मोच्यः येनाङ्गेन ताडयेत्तस्य छेदः अथास्य वेदमुपश्रृण्वतः त्रपुजतुभ्यां[4] श्रोत्रपूरणं उदाहरणे जिह्वाच्छेदः धारणे शरीरभेदः[5] ।

(१७) मनु :—

श्रुतं देशश्च जातिश्च कर्म शारीरमेव च ।
वितथेन ब्रुवन्दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥

त्वया नाधीतं न त्वमार्यावर्त्तीय इति वा न त्वं ब्राह्मण इति वा न त्वया तपःकृतमिति वा त्वं दुश्चर्मेति वा वादं[6] यः करोति सोऽप्येतद्दण्ड्यः ।

(१८) व्यास : –

पापो[7] वा पापवक्ता वा महापातकसंशकाः ।
आद्यमध्योत्तमान्दण्डान् दद्युरेते यथाक्रमः ॥

यथाक्रमं वक्तृणामिति प्रथममध्यमोत्तमसाहसो[8] दण्ड इत्यर्थः ।

---

१ च = तथा । २ च + छ अभिद्रोहेण । ३ ग । पातकाद्यनु च + छ पातकाद्यभि ।
४ छ = त्रपुजतुना । ५ च = भेदश्च । ६ ग + च = वदन् यः कुप्येत । ७ ख + च = पापोपपापवक्तारो । ८ ग = साहसात्मा ।

(१९) नारद[1] :—

अवक्रुश्य च राजानं धर्मं[2] च स्वे व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन च ॥

(२०) याज्ञवल्क्य :—

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा ।
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत् ॥

(२१) उशना :—

यत्र नोक्तो दमः सर्वैरानन्त्याच्च[3] महात्मभिः ।
तत्र कार्यं परिज्ञाय कर्त्तव्यं दण्डधारणम् ॥
प्रपञ्चितमिदं मया नीतिचिन्तामणौ ।

---

## अथ दण्डपारुष्यम् ॥ १२ ॥

(१) तत्र बृहस्पति :—

भस्मादीनां प्रक्षेपणं[4] ताडनञ्च करादिना ।
प्रथमं दण्डपारुष्यं दमः कार्य्योऽत्र मा[illegible]कः ॥
एष दण्डः समेपूक्तः परस्त्रीष्वधिकेषु च ।
द्विगुणस्त्रिगुणो ज्ञेयः प्रधानापेक्षया[5] बुधैः ॥
ताडनमत्रोद्गमनमात्रम् । समेषु जात्यादिभिः । माषिकः[6], माषमितः ।

(२) स्पर्शे याज्ञवल्क्य :—

भस्मपङ्करजःस्पर्शे दण्डो दश पणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः[7] ॥

---

१ छ – शूद्रादन्यस्यापि नारदः । २ च – धर्मं वा अव्यवस्थितम् – छ – धर्मे स्वे हि वा व्यवस्थितम् ३ ग – सर्वैरानन्त्यात्तुमहात्मभिः च – रानन्त्यात्तु महात्मभिः । छ – रानन्त्याच्च । ४ – अवक्षेपम् । ५ च – प्राधान्यप्रेक्षया । ६ छ – माषिको राजतः माषमितः । ७ च + छ – स्मृतः ।

समेष्वेव परस्त्रीषु द्विगुणं तूत्तमेषु च ॥

हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥

अमेध्यं अश्रुप्रभृति। पार्ष्णिश्चरणस्य पश्चाद्भागः। निष्ठ्यूतं मुखश्लेष्मा। मोहो ज्ञानाभावः। मदो मद्यादिना। आदिपदादुन्मादादिना।

(३) कात्यायन :

छर्दिमूत्रपुरीषाद्यैरधःसु स चतुर्गुणः।

षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः स्मृतः ॥

(४) वान्तशुक्रादिना समस्य परस्याधः काये योजने दशपणश्चतुर्गुणः। एवं मध्याङ्गादौ षड्गुणादिरित्यर्थः।

(५) याज्ञवल्क्य :—

पादकेशांशुककरोल्लुञ्चने च पणा दश।

पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥

(६) समस्य हस्तपादकेशवस्त्रान्यतमाकर्षणे दश पणाः। तस्यैव वस्त्रावेष्टननिष्ठुराकर्षणपूर्वकस्वचरणारोपणे शतं पणा दण्ड इत्यर्थः।

(७) कात्यायन :—

उत्सारणे तु हस्तस्य कार्यो द्वादशको दमः।

स एव द्विगुणः प्रोक्तः पातने च द्विजातिषु ॥

समेष्विदम्।

(८) बृहस्पति :—

उद्यतेऽश्मशिलाकाष्ठे कर्त्तव्यः प्रथमो दमः।

परस्परं हस्तपादे दश विंशतिकस्तथा ॥

---

१ ग+च+छ - द्विगुणस्तूत्तमेषु च। २ ग - मदो मद्यादिः ३ च - उन्मादादि। ४ ग - वाद्यैः सच चतुर्गुणः। च - रापाद्ये स चतुर्गुणः। ५ घ रधः पुंसां चतुर्गुणः। ६ क - चतुर्गुणा। ७ ग - मध्येषु ८ छ - मूत्रादिना ९ च+छ - कराकर्षणेषु पणान्दश। १० च - पादन्यासे। ११ छ - वस्त्रावेष्टनिष्ठुराकर्षण। १२ ग - उद्गूरणे तु। च - उद्गूरणेन हस्तस्य। छ - उद्गूरणे च।

उभयोरिदं हस्ते दश, पादे विंशतिः। काष्ठादौ द्वादश। इदमपि समयोरेव।

(९) विष्णु :—

हस्तेनोद्गारयिता दश कार्षापणान् पादेन विंशतिम् काष्ठेन प्रथमसाहसम्[1]। शस्त्रेणोत्तम साहसम्। उत्तमं प्रत्यधमश्चेच्छस्त्रमुद्यमयेत्[2] तदा सहस्रं पणान्दण्ड्यः।

(१०) याज्ञवल्क्य :—

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
परस्परस्य सर्वेषां शस्त्रे[3] मध्यमसाहसम्॥

(११) अन्योऽन्यं ब्राह्मणेन ब्राह्मणं प्रति शस्त्र उद्गूर्णे पणपञ्चशतो प्रत्येकमुभयोर्दण्डः।

(१२) मनु :—

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति।
पादेन प्रहरन्कोपात् पादच्छेदनमर्हति॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत्॥
अवष्ठीवयतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः।
अवमूत्रयतो मेढ्रमवपर्दयतो[4] गुदम्॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्।

१ च = काष्ठादौ प्रथमसाहसम्। २ च + छ = उद्यम्यते। ३ ग + च = शस्त्रेउद्गूरणे।
४ च + छ = अवसर्द्धयतो।

पादयोर्दाढिकायां च ग्रीवायां वृषणेषु[1] च ॥

(१३) ब्राह्मणविषये शूद्रस्य दण्डोऽयम् । मुखश्लेष्मणा मूत्रेण पर्दने[2] वा ब्राह्मणस्यापमानने यथाक्रममोष्ठादिच्छेदः ।

(१४) बृहस्पति :—

मध्यमः शस्त्रसन्धाने संयोज्यः क्षुब्धयोर्द्वयोः ।
कार्यः क्षतानुरूपस्तु लग्ने घाते दमो बुधैः ॥
इष्टकोपलकाष्ठाद्यैस्ताडने[3] तु द्विमाषकः ।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥

(१५) शस्त्रप्रयोगे तु विष्णु :—

दण्ड्यः शोणितेन विना दुःखमुत्पादयिता
त्रिंशतं[4] पणान् सह शोणितेन चतुःषष्टिम् ॥

(१६) शस्त्रेणैवाधिकभेदने मनु :—

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्निष्कान्प्रवास्यस्त्वस्थिभेदकः ॥

निष्काश्चत्वारः सुवर्णाः ।

(१७) बृहस्पति :—

त्वग्भेदे[5] प्रथमो दण्डो मांसभेदे तु मध्यमः ।
उत्तमश्चास्थिभेदे च घातके[6] च प्रमापणम् ॥

(१८) प्रमापणं मारणम् ।

कर्णनासाकरच्छेदे दन्तभेदेऽङ्घ्रिभेदने ।
कर्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु च ॥

पतितेष्विति स्वस्वस्थानाद्विच्छिन्नेषु कर्णादिषु ।

(१९) कात्यायन :—

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।

---

१ ग—चरणेषु च । २ च+छ—मूत्रेण गुदशब्देन वा । ३ च—ताडयेत्तद्द्विमाषकः । ४ च—द्वात्रिंशत् पणान् । ५ छ+च—भङ्गेषु । ६ ग—घातने ।

**छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ।**

छेदने स्वस्थानच्यवने । भेदने विदारणे ।

(२०) **याज्ञवल्क्य :—**

**करपाददन्तभङ्गे छेदने कर्णनाशयोः ।**

**मध्यो दण्डो व्रणोद्भेदे मृतकल्पे हते तथा ।**

छेदने विदारणे । व्रणोद्भेदे प्ररूढव्रणस्य पुनर्नवीकरणे । तथा ताडितो वा यथा मृतकल्पोऽभूत् एतेषु प्रत्येकं पणपञ्चशतो दण्डः ।

(२१) **विष्णु :—**

**नेत्रकन्धराबाहुसक्थिभङ्गे चोत्तमम् । उभयनेत्रभेदिनं यावज्जीवं बन्धनान्न मोचयेत्तादृशमेव कुर्यात् ।**

पादमूलयोः सन्धिः सक्थिः तादृशं यादृशमन्यं कृतवान् ।

(२२) **याज्ञवल्क्य :—**

**द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।**

**विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥**

(२३) अल्पपीडासमाधेयद्विनेत्रभेदने तथा अमुकसमये राजा नङ्क्ष्यतीत्यादेशकारिणः । तथा विप्रचिह्नेन यज्ञोपवीतधारणादिना जीविकां कुर्वतः शूद्रस्य च दण्डोऽयं । (२४) एकस्मिन्नेवापराधे दण्डविकल्पाः पीडोत्कर्षापकर्षाभ्यां समाधेया ।

(२५) **तदाह मनु :—**

**मनुष्याणां पशूनां च दुःखाय प्रकृते सति ।**

**यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥**

दुःखाय दुःखमुद्दिश्य तेन प्रमादकृते दोषो नास्तीत्यर्थः ।

(२६) **नारद :—**

**येनाङ्गेनावरो वर्णो ब्राह्मणस्याऽपराध्नुयात् ।**

**तदङ्गं तस्य छेत्तव्यमेवं शुद्धिमवाप्नुयात् ॥**

१ छ · च्यावने । २ ग · कन्धरा । ३ छ । च · भेदिनं राजा यावज्जीव । ४ छ · भेदिनः राजा

(२७) तथा—

राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशतातिगम् ॥

(२८) सापराधेऽपि राजनि प्रकृतवन्तं शूलमारोप्याग्नौ पचेदित्यर्थः । ब्राह्मणेतर-विषयमेतत् । न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितमिति विशेषनिषेधात् ।

(२९) मनुः—

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति ॥
श्रेयांसं त्रैवर्गिकम् । अन्त्यजः शूद्रः ।

(३०) तथा—

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत् ॥
कृताङ्को लौहेन । स्फिचं श्रोण्येकदेशम् ।

(३१) तथा—

अवष्ठीवयतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवपर्दयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च ॥

---

१ ग—राजानं । २ क—शून्यं तमग्नौ । ३ च+छ राजनि कृतप्रहारं । ४ च पाचयेदित्यर्थः । ५ पापेष्वपि स्थितम् । ६ च देशः । ७ च+छ—मपसर्द्धयतो ।

(३२) त्रैवर्णिकोपरि दर्पात् श्लेष्माणं त्यजतः शूद्रस्य तु ओष्ठौ तथा मूत्रं कुर्वतो मेहनं तथा गुदशब्दं कुर्वतो गुदं तथा केशे पादे श्मश्रुणि ग्रीवायां वृषणे वा धारयतो हस्तौ छिन्द्यादित्यर्थः ।

(३३) **शूद्रस्येत्यनुवृत्तौ आपस्तम्ब :**

**वाचि पथि शय्यायामासने च समीभवतो दण्डताडनम् ।**

वाचि युगपद्वादः । पथि तुल्यवद्गमनम् । शय्यासनयोः सहोपवेशनम् ।

(३४) **कात्यायन :—**

**वाक्पारुष्ये यथैवोक्तः प्रतिलोमानुलोमतः ।**
**तथैव दण्डपारुष्ये पात्या[1] दण्डा यथाक्रमम् ॥**

(३५) **बृहस्पतिः—**

**अङ्गावपीडने चैव भेदने छेदने तथा ।**
**समुत्थानव्ययं दाप्यः कलहापहृतञ्च यत् ॥**

समुत्थानव्ययं स्वस्थीकरणव्ययम्[2] ।

(३६) **याज्ञवल्क्य :—**

**एकं घ्नतां बहूनां च यथोक्तो[3] द्विगुणो दमः ।**
**कलहापहृतं देयं दण्डश्च द्विगुणः स्मृतः ॥**

द्विगुणो दमः प्रतिव्यक्तिकलहापहृतं कलहे[4] यत्नेन लुण्ठितम् ।

(३७) **अथ मनु :—**

**भार्या[5] पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।**
**प्राप्तापराधास्ताड्याः[6] स्युः रज्वा वेणुदलेन वा ॥**
**पृष्ठतश्च शरीरस्य नोत्तमाङ्गे कथञ्चन[7] । ।**
**अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम् ॥**

---

१ च = ग्राह्या दण्डा । २ च + छ स्वस्थी । ३ ग + च + छ - यथोक्ताद्द्विगुणो दमः। ४ च = कलहेन युद्धेन । ५ च = भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः । प्राप्तापराधास्ताड्याःस्यू रज्वा वेणुदलेन वा ॥ अधस्तात्तु प्रहर्तव्या नोत्तमाङ्गे कदाचन । ६ ताड्यःस्याद्रज्वा । ७ छ = कदाचन ।

(३८) यम[1] :—

अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति ।

(३९) शिष्यानुवृत्तावापस्तम्ब[2] :—

अपराधेषु चैनं[3] सततमुपालभेताऽतित्रास मुपवासमुदकोपस्पर्शनमिति दण्डा यथामात्रमनावृत्तेः ।

उपालम्भो रूक्षवचनम् । अतित्रासो भीत्युत्पादनम् । उदकोपस्पर्शनं पानीयसेचनम् । शीतकाले[4] यथामात्रं तच्छक्त्यनुसारेण । अनावृत्तेः[5] अपराधस्येति शेषः ।

(४०) नारद :—

पुत्रापराधेन पिता श्ववांश्च[6] शुनि दण्डभाक् ।
न मर्कटे[7] तु तत्स्वामी तेनैव प्रहितो न चेत् ॥

(४१) याज्ञवल्क्य :—

शक्तो[8] ह्यमोक्षयन्स्वामी दंष्ट्रिणां शृङ्गिणान्तथा ।

(४२) श्वादिस्वामी शक्तः सन् श्वादिग्रस्तं न चेद्रक्षेत्तदा प्रथमं साहसं स्वं श्वानमपसारयेत्युक्तोपि[9][10] न चेद्रक्षेत्तदा[11] मध्यमं दण्ड्य इत्यर्थः ।

(४३) कात्यायन :—

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम् ।
तदा साक्षिकृतन्तत्र दिव्यं वा विनियोजयेत्[12] ॥

साक्ष्यभावे च दिव्यम् ।

---

१ ङ मनुः । २ च – ब्रह्मचारीत्यनुवृत्तौ नारदः – अनुशास्यः स गुरुणा न चेदनुविधीयते । अवधेनाथवा तन्त्र्या रज्ज्वा वेणुदलेन वा ॥ भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि । अवधेन ताडनहेतु दण्डादिव्यतिरेकेन । गोतमः—शिष्यशिष्टिरवधेनाशक्तो रज्जुवेणुदलाभ्यां तनूभ्यामन्येन घ्नन् राज्ञा शास्यः । ३ ग – चैवं । ४ छ – शीतकालेत्विदम् । ५ ख + ग + छ – आनिवृत्तेः । ६ क – स्वरांश्च । च – ताडयन्नैव दण्डभाक् । ७ च – न संकटे । ८ छ – मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्च शतावरः । ख + ग । ङ + च – प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा । शक्तोह्यमोक्षयन् । ९ ग – यदि । १० ग + च + छ – श्वानमपसारयेत्याद्य क्तोपि । ११ छ – स मध्यमं । १२ ध – प्रतियोजयेत् ।

(४४) नारद :—

पूर्वमाक्षारयेद्यस्तु[1] नियतः स्यात्स दोषभाक् ।
पश्चाद्यः[2] सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

आक्षारयेत्परुषं वदेत् ।

(४५) कात्यायन :—

आभीषणेन दण्डेन प्रहरेद्यस्तु मानवः ।
पूर्वं वा पीडितो वाथ स दण्ड्यः परिकीर्तितः ।

आभीषणेन खड्गादिना ।

(४६) बृहस्पति :—

आक्रुष्टस्तु[3] समाक्रोशं[4] ताडितः प्रति ताडयन् ।
हत्वाततायिनश्चैव नापराधो भवेन्नरः ॥
वाक्पारुष्यादिना नीचो यः सन्तमभिलंघयेत् ।
स एव ताडयंस्तस्य नान्वेष्टव्यो महीभुजा ॥

नीच शूद्रादिः । सन्तं ब्राह्मणादिकम् । स एव ब्राह्मणादिः तस्य शूद्रादेः । हिंसार्थे षष्ठी । नान्वेष्टव्यो न दण्ड्य इत्यर्थः

(४७) नारद :—

श्वपाकषण्ढचाण्डालवेश्यावधकवृत्तिषु ।
हस्तिपव्रात्यदासेषु गुर्वाचार्यातिगेषु च ॥
मर्यादातिक्रमे सद्यो घात एवानुशासनम् ।
न तु तद्दण्डपारुष्ये दोषमाहुर्मनीषिणः ॥
यमेते ह्यतिवर्त्तेरन्नोत्तमस्तान्नृपं नयेत् ।
स एव विनयं कुर्यात् न तद्विनयभाङ्नृपः ॥
मला ह्येते मनुष्याणां धनमेषां मलात्मकम् ।
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥

---

१ क - सर्व । २ छ विनये । ३ च - यदा । ४ आक्रोशंस्ताडितः ।

श्वपाक[1]: क्षत्रियात् शूद्रायां जाता उग्रा शूद्रात्[2] क्षत्रियायां जातः क्षत्ता। क्षत्तुः उग्रायां जातः श्वपाकः। षण्ढः क्लीवः। चाण्डालो ब्राह्मण्यां शूद्राज्जातः। बन्धकवृत्तिर्लुब्धकः धीवरादिः। हस्तिपो हस्त्यारोहकः। व्रात्यः प्रसिद्धः। दासश्चेटकः। घातस्ताडनम्। तच्च यथापराधम्।

(४८) कात्यायन :—

अस्पृश्यधूर्त्तदासानां म्लेच्छानां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः॥

पापकारिणोऽतिशयेन। प्रातिलोम्यप्रसूता निषादादयः।

(४९) विष्णु :—

अजाऽश्वोष्ट्रघाती च्छेककरपादः कार्यः।
विमांसविक्रयी च पशुघाती[3] च कार्षापणशतं दण्ड्यः।
पशुस्वामिने[4] च तन्मूल्यं दद्यात्। पशूनां पुंस्त्वोपघाती[5] अरण्यपशुघाती च पञ्चाशतं कार्षापणान्, पक्षिमत्स्यघाती दश कार्षापणान्।

अतज्जाविनामेष दण्डः। विमांसमभक्ष्यमांसम्।

(५०) मनुः —

वनस्पतीनां सर्वेषामुपभोगो यथा यथा।
तथा तथा दमः कार्य्यो हिंसायामिति धारणा॥

(५१) याज्ञवल्क्य :—

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे।
उपजीव्यद्रुमाणान्तु विंशतिर्द्विगुणो[6] दमः॥
चैत्यश्मशानसीमासु पण्यस्थाने[7] सुरालये।

---

१ च + छ - श्वपाकेति शूद्रायां क्षत्रियाज्जातउग्रा। २ च - उग्रात् क्षत्रियायां जातः क्षत्ता। ३ च + छ - ग्रामपशुघाती। ४ छ - स्वामिनस्तन्मूल्यं। ग + च - स्वामिनश्च। ५ च - घातकारी च। ६ छ - विंशतेर्द्विगुणो। ७ क - पुण्यस्थाने।

जातद्रुमाणां द्विगुणा दमा वृक्षेऽथ विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कृन्तने[1] ॥

प्ररोहिशाखिनो वटादयः । उपजीव्यद्रुमाः पिप्पलादयः । सर्वदारणं[2] मूलच्छेदनम् । तथा चैषां वृक्षाणां शाखाच्छेदने विंशतिः पणाः । स्कन्धच्छेदने चत्वारिंशत् । मूलच्छेदन अशीतिपणान्[3] दण्ड्यः । गुल्मादौ तु दशपणात्मकोदमः[4] उक्तस्थानेषु छेदने कृते सत्येवं वर्द्धत इत्यर्थः ।

क्षुपाः ह्रस्वशाखाः

शिफाः शाखोटादयः ।

(५२) दण्ड्या[5] इत्यनुवृत्तौ विष्णु :—

फलोपद्रुमच्छेदी[6] तृत्तमसाहसम् । पुष्पोपगमद्रुमच्छेदी मध्यमसाहसम्[7] । वल्ली[8] गुल्मलताच्छेदी कार्षापणशतम् । तृणच्छेद्येकम्[9] ।

सर्वे च[10] ते स्वामिनां तदुत्पत्तिं दद्युरितिशेषः ।

---

## अथ स्तेयम् ॥१३॥

(१) तत्र मनु :—

तेषान्दोषानभिख्याप्य[11] स्वे स्वे कर्मणि तत्त्वतः ।
कुर्वीत शासनं राजा सम्यक् सारापराधतः ।

---

१ च = कर्त्तने । २ छ सर्वविदारणं मूलच्छेदनम् । ङ = सर्वविदारणे मूलच्छेदने । ३ च + छ = पणा दण्डः । ४ ग दण्डः । ५ छ दण्ड्य । ६ च द्रुमच्छेदी मध्यमम् । छ = फलोपगद्रुमच्छेदी । ७ छ मध्यमम् । च द्रुमच्छेदी मध्यमम् । ८ क = वल्मी । ९ छ = तृणच्छेदी एकैक कार्षापणम् । च - तृणच्छेद्यर्धम् । १० च = सर्वंच स्वामिनां । ग + छ = तत्स्वामिनाम् । ११ च - ज्ञाप्य । ख = ख्याप्य ।

तेषां चौराणाम् । प्रकरणात् अपहृतद्रव्यस्य मार्गानुसारेण शासनं राज्ञा कार्यमित्यर्थः ।

(२) बृहस्पति :—

संसर्गचिह्नलोप्त्रैश्च विज्ञाता[1] राजपूरुषैः ।

प्रदाप्यापहृतं शास्या दमैः शास्त्रप्रचोदितैः ॥

संसर्गः प्रमितैश्चौरैः सह मिलनम् । चिह्नं चौरत्वलिङ्गं सन्धिखनि आदि । लोप्त्रं चोरितद्रव्यम् ।

(३) एषामन्यतमेनापि चोरमवधार्य चोरितद्रव्यं तद्द्वारा द्रव्यस्वामिने प्रदाप्य राजा शास्त्रदृष्टेन दण्डेन तं शमयेदित्यर्थः[3] ।

(४) मनु :—

परमं यत्नमातिष्ठेत् स्तेनानां निग्रहे नृपः ।

स्तेनानां निग्रहादस्य यशो राष्ट्रश्च वर्द्धयेत् ॥

अभयस्य तु यो दाता स पूज्यः सततं नृपः ।

सत्रं[4] हि वर्द्धते तस्य सदैवाऽभयदक्षिणम् ॥

तथा—

अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः ।

तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

परिहीयते स चेत्यन्वयः । (५) चौराश्च द्विविधाः प्रकाशा अप्रकाशाश्च । तत्र प्रकाशचौरा बणिगादयः । अप्रकाशचौराः सन्धिकारादयः ।

(६) तत्राद्ये[5] व्यास :—

तुलामानविशेषेण लेख्येन गणनेन[6] च ।

अर्घस्य[7] वृद्धिह्रासेन मुष्णन्ति बणिजो नरान् ॥

---

१ च = विज्ञातो । २ च = शास्यो । ३ च = तं दमयेदित्यर्थः । ४ ग = राष्ट्रं हि । ५ छ = आद्येषु । ६ च = स्वगणनेन च । ७ क = अर्थस्य ।

**तद्द्रव्यसदृशैर्द्रव्यैर्हीनमूल्यैर्विमिश्रणम् ।**
**कुर्वन्त्यौपायिकाश्चान्ये पण्यानां परिवर्त्तने ॥**

(७) **याज्ञवल्क्य :—**

**मानेन तुलया वापि योंशमष्टममाहरेत् ।**
**दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥**

(८) वाकारोऽनास्थायाम् । तेन येन केनापि छद्मप्रकारेण [२]कपटतुलादिना यः परद्रव्यस्याष्टमांशमपहरति स पणशतद्वयन्दण्डं दाप्यः । यस्तु नवमांशं सोऽष्टमभागन्यूनं द्विशतं यस्तु सप्तमांशं स साष्टमभागं द्विशतं दाप्य इत्यर्थः ।

(९) **कात्यायन :—**

**तुलामानप्रतीमानप्रतिरूपकलक्षितैः ।**
**चरन्नलक्षितैर्वापि प्राप्नुयात्पूर्वसाहसम् ॥**

(१०) प्रतीमानं [३]परिमाणेति प्रसिद्धम् । एतैश्चरन् व्यवहरन् [४]सार्द्धपणशतद्वयं दमं दाप्यः । [५]एतच्चाष्टमांशाधिकछद्मकरणपक्षे [६]तेन **याज्ञवल्क्योक्त** द्विशतदमाविरोधः ।

(११) **मनु :—**

**समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा ।**
**स प्राप्नुयाद्दमं पूर्वन्नरो मध्यममेव वा ॥**

(१२) समैः साधारणैः वस्तुभिः विषमं विलक्षणं वस्तु परिवर्त्तेन मूल्येन वा गृह्णन् [७]परस्य षड्भागे हानौ सार्द्धपणशतद्वयं पञ्चमादिभागहानौ पञ्च पणशतीं दमं दाप्य इत्यर्थः ।

---

१ छ = तद्द्रव्यं । २ च = प्रकटतुलादिना । ३ ख + च = पालिमाने । ४ ग + छ = सार्द्धशतद्वयं । ५ छ = एतच्चाष्टमं साधिकत्वमधिकछद्मकरणपक्षे । घ = अष्टमांशाधिकत्वमवधिक । ६ छ + च = याज्ञवल्क्योक्तद्विशतदमविरोधः । ७ ग = परस्य सप्तमभाग । ख = षष्ठभागहानौ ।

(१३) तथा—

अबीजविक्रयी यस्तु बीजोत्कृष्टा[1] तथैव च ।
मर्यादाभेदकश्चैव प्राप्नुयाद्विकृतं वधम् ॥

(१४) अबीजं बीजतया यो विक्रीणीते यो वा परोप्तं क्षेत्रं बलेन हरति यो वा देशस्य जातेर्वा कुलस्य शास्त्रस्य वा राजलोकस्य वा स्थितिमतिक्रामति स कर्णादिच्छेदनं[2] प्राप्नोतीत्यर्थः ।

(१५) बृहस्पति :—

प्रच्छन्नदोषव्यामिश्र[3]पुनःसंस्कृतविक्रयी ।
पण्यन्तद्द्विगुणन्दाप्यो वणिग्दण्डश्च तत्समम् ॥

(१६) संगुप्तदोषं[4] वा अपद्रव्यमिश्रितं वा शाणादिना पुनर्नवीकृतम्वा यो विक्रीणीते स[5] क्रीतभाजनाद् द्विगुणं भाजनादि[6] विक्रेतरि क्रीतवस्तुसमं च दण्डं राजनि दाप्य इत्यर्थः ।

(१७) याज्ञवल्क्य[7] :—

मिथ्यावदन्परीमाणं[8] शुल्कस्थानादपक्रमन् ।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी ॥

(१८) पण्यस्य परिमाणमनर्थ्यं वदन् क्रयादौ कर्त्तव्ये आपणं परिहरन् सकपटं क्रयं विक्रयं वा कुर्वन् प्रकृतपण्यादष्टगुणं दण्डन्दाप्य इत्यर्थः ।

---

१ छ - वीजोत्क्रष्टा । २ छ - मर्हतीत्यर्थः । ३ च + छ = प्रच्छन्नदोषं व्यामिश्रं । ४ छ = दोषमपद्रव्य । ५ च = स विक्रीत । ६ छ - भाजनादिकं क्रेतरि क्रीतद्रव्य । च - भाजनादिक क्रेत्रे तद्विक्रीतवस्तु । ७ ग + ङ + घ - भेषजस्नेहलवणगन्धधान्यगुडादिषु । द्रव्येषु हीनं क्षिपतःपणा दण्डस्तु षोडश । यथोक्तंसद्द्रव्यं विक्रीयापद्रव्येण विमिश्रीकृत्य यो विक्रीणोते तस्य षोडश पणा दण्ड इत्यर्थः । (च - द्रव्यंविक्रीयअपद्रव्य) (च = मिश्री) अत्रगुरुमूल्यद्रव्येषु बृहस्पत्युक्ता लघुमूल्यकद्रव्येषु तु (लघुमूल्यकेषुतु) याज्ञवल्क्योक्ता व्यवस्थेत्यविरोधः । तथेत्यधिकः पाठः । ८ च = परीमाण ।

(१९) विष्णु :—

शुल्कस्थानमपाक्रामन् सर्वापहारमाप्नुयात्[1]।

(२०) विक्रयादौ कर्त्तव्ये आपणं परिहरन् सर्वस्वं दण्ड इत्यर्थः[2]। इदमभ्यासे याज्ञवल्क्योक्तं[3] त्वनभ्यास इत्यविरोधः।

(२१) शङ्ख :—

कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा।

कूटतुलया कूटमानेन[4] कूटप्रतिमानेन[5] यो व्यवहरति[6] तस्य मुण्डनं यस्तु तच्छीलः तस्य कर्णाद्यन्यतरच्छेदश्च[7] कार्य इत्यर्थः। अर्थलाघवगौरवाभ्यामत्र व्यवस्थेत्यन्ये।

(२२) याज्ञवल्क्य :—

तुलाशासनमानानां कूटकृन्नाशकस्य[8] च।

एभिश्च व्यवहर्त्ता यः स दाप्यो दममुत्तमम्॥

यस्तुलाम्वा राजपत्रादिकं[9] वा ताम्रादिकम्वा मुद्रां वा कूटान्निर्माति यो वा तेन व्यहरति स पणसहस्रं दण्ड्य इत्यर्थः।

(२३) तथा—

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम्।

स काणकपरीक्षी[10] तु दाप्य उत्तमसाहसम्॥

काणको[11] मुद्रापरीक्षको दौरात्म्यादिना मन्दां भद्रां भद्रां वा मन्दां ब्रूते स सहस्रं पणान् दण्ड्य इत्यर्थः।

(२४) दण्ड उत्तमसाहस इत्यनुवृत्तौ विष्णु :—

प्रतिरूपकं विक्रयकस्य च।

प्रतिरूपकं कृतमुक्तादि[12]।

---

१ ग – शुल्कस्थानमपक्रामन् सर्वापहरणमाप्नुयात्। २ छ – दाप्य इत्यर्थः। ३ ग + च = याज्ञवल्क्योक्तस्त्वनभ्यासे। ४ च = मानेन वा। ५ ख + ग = मानेन वा। ६ ग + च = यो व्यवहरति बहुधा। ७ ख + ग = कर्णाद्यन्यतमच्छेदः। ८ च = नाडकस्यच। ९ क = राजपत्रं वा। १० छ = कानक। च = नाडक। ११ छ = कानको। च = नाडको। १२ छ = कृत्तिम। च = कृतक।

(२५) याज्ञवल्क्य :—

सम्भूय कुर्वतां[1] सर्वं[2] समाधिं कारुशिल्पिनाम् ।
अर्थस्य ह्रासं वृद्धिं च साहस्रो दण्ड उच्यते ॥

कारुः प्रतिमादिघटकः । शिल्पी चित्रकरः । (२६) कारोः शिल्पिनो वा अति पीडाकरमर्थं[3] सम्भूय[4] कुर्वतां वणिजां तथा राजस्थापितस्य मूल्यस्य ह्रासं वृद्धिं वा सम्भूय कुर्वतां तेषां पणसहस्रात्मको दण्ड[5] इत्यर्थः ।

(२७) तथा —

सम्भूय वणिजां पण्यमनर्घेणावरुन्धताम् ।
विक्रीणतामवाभिहितो[6] दण्ड उत्तमसाहसः ॥

(२८) ये वणिजो बहुमूल्यमल्पमूल्येन छद्मना[7] क्रीणन्ति ये वा अल्पमूल्यं बहु-मूल्येन विक्रीणीते ते पणसहस्रं दण्ड्या इत्यर्थः ।

(२९) मनु :—

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च
तानि निर्हरतो लोभात् सर्वहारं हरेन्नृपः ॥

(३०) यानि करितुरगादीनि राजयोग्यानि[8] वा राज्ञा[9] निवारितक्रयाणि वा तानि राजाज्ञानावरणेन क्रीणानस्य तद्विक्रयप्राप्तं सकलमेव धनं राजा गृह्णीयादित्यर्थः ।

(३१) मनु :—

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ।
कुर्युरर्घं[10] यथा पण्यं ततो विंशं नृपो हरेत् ॥

---

१ च = अर्घमाधिकं । च + छ = अर्घसवाधं । २ ग = सावाधं । ३ च + छ = करमर्थं । ४ च = सम्भूय कुर्वतां तेषां पणसहस्रात्मको दण्ड इत्यर्थः । ५ छ = दण्डोभवतीत्यर्थः । ६ च = विक्रीणतामवा विहिता । ७ च + छ = छद्मादिना । ८ च + छ = राजयोग्यानि यानि वा । ९ च + छ = निवारितक्रयविक्रयाणि तानि राजाज्ञानावरणेन विक्रीणानस्य । १० च = अर्घ्यं ।

(३२) **विष्णुः—**

**स्वदेशे[1] शुल्कांशं दशममादद्यात् ।**

**परदेशपण्याच्च विंशतितमम् ॥**

(३३) स्वदेशे क्रीत्वा विक्रीते[2] यावती वृद्धिः प्राप्ता तस्या दशममागं[3], परदेशे क्रीत्वा स्वदेशे विक्रीते यावती वृद्धिस्तस्या[4] विंशतितमं भागं राजा गृह्णीयादिति वाक्ययोरर्थः ।

(३४) **गौतमः[5]—**

**विंशतिभागः शुल्कः[6] पण्ये मूलपुष्पौषधिमधुमांसतृणेन्धनानान्तु षष्ठः ।**

(३५) मूलादीनां सप्तानामपि परदेशात्क्रीत्वानीय स्वदेशे विक्रीतानां वृद्धेः षष्ठांशो राजग्राह्य इत्यर्थः ।

(३६) **वसिष्ठः :—**

शुल्के चापि[7] मानवं श्लोकमुदाहरन्ति ।

**न भिन्नकार्षापणमस्ति शुल्कं**

**न शिल्पवृत्तौ न शिशौ न दूते ।**

**न भैक्ष्यलब्धे न हृतावशेषे**

**न श्रोत्रिये प्रव्रजिते न यज्ञे ॥**

(३७) भिन्नो न्यूनः । तेन कार्षापणन्यूनमूल्ये पण्ये[8] वा राजग्राह्यं नास्ति । एवं शिल्पिनिर्माणेन प्राप्ते तथा वत्सादिमूल्ये तथा[9,10] चौरहृतावशिष्टे पण्ये तथा श्रोत्रिये यतौ वा विक्रेतरि तथा यज्ञार्थमानीते राजग्राह्यन्नास्तीत्यर्थः ।

---

१ च - पण्याच्छुल्कांशं । छ = स्वदेशपण्याच्छुल्कांशं । २ क - विक्रीयते । ३ छ = दशमं भागं । ४ छ वृद्धिरायाता । ५ च + छ = गोतमः । ६ च = शुल्कं । ७ छ = अपिश्लोकमुदा० । ८ च + छ = पण्यं राज । ९ छ = शिल्प । १० ग + च = दूत्येन प्राप्ते । च = तथा भिक्षालब्धे । छ = तथा दौत्येन प्राप्ते ।

(३८) विष्णु :—

उत्तमं साहसं दण्ड्यो भिषक् मिथ्याचरन् उत्तमेषु मध्यमं मध्यमेषु प्रथमं तिर्यक्षु ।

(३९) व्यास :—

अनिच्छन्तमभूमिज्ञं[1] संयोज्य व्यसने नरम् ।
अपकर्षन्ति तद्द्रव्यं वेश्याकितवशिल्पिनः ॥

अभूमिज्ञं[2] कृत्याकृत्यानभिज्ञं । एते विश्रब्धवञ्चका इति भावः ।

(४०) बृहस्पति :—

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्रब्धवञ्चकाश्चैव निर्वास्याः सर्वं एव ते ॥

(४१) याज्ञवल्क्य :—

उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवा[illegible]येत् ।

(४२) तथा—

वसानस्त्रीन्पणान्दाप्यो नेजकस्तु परांशुकम् ॥
विक्रया[illegible]क्रयाधानयाचितेषु पणान्दश ॥

अवक्रयो भाटकम् । आधानं बन्धकीकरणम् ।

(४३) बृहस्पति :—

दण्डादि[3][illegible]क्तमात्मानं दर्शयन्ति मृषा तु ये ।
हिंसन्ति छद्मना नॄन्[4] ये वध्यास्ते राजपूरुषैः ॥

(४४) मनु :—

सर्वकण्टकपापि[illegible] हेमकारन्तु पार्थिवः ।
प्र[illegible]तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

---

१ च—अभूमज्ञं । २ च—अभूमज्ञं । ३ च—दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये ।
४ च—नर्णां ।

कण्टकः प्रकाशतस्करः । (४५) प्रवर्त्तमानमिति नित्यप्रवृत्तौ लट् । तेनान्यायाभ्यासे शास्तिरियमित्याहुः ।

(४६) याज्ञवल्क्य :—

**कूटसुवर्णव्यवहारी विमांसस्य च विक्रयी ।**
**त्र्यङ्गहीनः प्रकर्त्तव्यो दाप्यश्चोत्तमसाहसम् ॥**

(४७) असुवर्णं औषधादियोगात् सुवर्णभ्रममुत्पाद्य यो विक्रयादिव्यवहारं करोति । यश्च श्वादिमांसं हरिणादिमांसत्वेन प्रकाश्य विक्रीणीते स पणसहस्रं दण्डमादाय नासादन्तकरशून्यः कार्य इत्यर्थः ।

(४८) तथा—

**अजातौ जातिकरणे विज्ञेयोऽष्टगुणो दमः ।**

(४९) लघुमूल्यके वस्तुनि कौशलेन बहुमूल्यकवस्तु सादृश्यमुत्पाद्य विक्रीय-प्रकृतमूल्यादधिकं यत्स लभते तदष्टगुणन्दाप्यः ।

(५०) **तथा समुद्रपरिवर्त्तश्च सारभाण्डश्च कृत्रिमम् ।**
**आधानं विक्रयं वापि नयतो दण्डकल्पना ॥**
**भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ।**
**द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥**

समुद्रः सम्पुटः । सारभाण्डं सारभूतं पण्यं मृगमदादि । (५१) तथाच तुच्छं सम्पुटं पूर्णत्वेन प्रकाश्य कृत्रिमं वस्तु तात्विकत्वेन वा प्रकाश्य न्यमतो विक्रीणानस्य वा दण्डः । (५२) तमेवाह भिन्न इति भिन्नं न्यूनम् । अर्थात् पणात् तेनार्द्धपणमूल्यके वस्तुनि असत्येव वस्तुत्वेन प्रकाशिते विक्रीते वा तथा तावत्येव काल्पनिके मृगमदादौ तात्त्विकत्वेन प्रकाश्य

---

१ छ—प्रकाशस्तस्करः । २ छ—तेनाभ्यासे । ३ च—व्यावहारी । ४ छ + च—यःक्रयादि । छ—यःकरादिव्यवहार । ५ छ—बहुमूल्यकरस्तु । ६ घ—दाप्य इत्यर्थः । ७ छ—विक्रयं वापि । ८ च—न्यायतो । ९ छ—द्विगुणो । १० छ—तात्विकत्वेन प्रकाश्य । ११ च—असत्येव वा । १२ च + छ—प्रकाश्य न्यस्ते विक्रीते वा ।

न्यस्ते विक्रीते वा पञ्चाशत्पणाः। पणमूल्यके तु पणशतं द्विपणमूल्यके तु पणशतद्वयं[1] एवं शतादिगुणो दण्ड्या[2] इत्यर्थः।

(५३) बृहस्पति :—

अल्पमूल्यन्तु[3] संस्कृत्य नयन्ति बहुमूल्यताम्।
स्त्रीवालकान् वञ्चयन्ति दण्ड्या अर्थानुरूपतः॥
हेममुक्ताप्रवालाद्यां[4] कुर्वन्ति कृत्रिमन् ये।
क्रेत्रे मूल्यं प्रदाप्यास्ते राज्ञे च द्विगुणं दमम्॥

सुगमम्।

(५४) याज्ञवल्क्य :—

अग्नौ सुवर्णमक्षीणं द्विपलं रजते गतम्[5]।
अष्टौ[6] तु त्रपुसीसे तु ताम्रे पञ्च दशायसि॥

(५५) सुवर्णं शुद्धसुवर्णम्। अन्यादृशस्य क्षयित्वादिति। तेन शुद्धसुवर्णे नक्तं दिवमपि ध्मायमाने क्षयो न भवति। तथा रजतपणशते[7] पणद्वयमेव[8]। तथा तावति त्रपुसीसे[9] वा अष्टपलमेव। तथा तावति ताम्रे पलपञ्चकम्। तादृशे आयसि दश पलानि क्षीयन्त इत्यर्थः। (५६) तथाच ततोऽधिकं क्षयं वदन्[10] वणिग्दण्ड्य इति भावः।

(५७) याज्ञवल्क्य :—

शते दशपला वृद्धिरौर्णे कार्पासिके तथा।
मध्ये पञ्चपला सौत्रे सूक्ष्मे तु त्रिपला स्मृता॥

---

१ च पणशतद्वयमेव शतगुणोदण्ड्य इत्यर्थः। २ छ = दण्ड इत्यर्थः। ३ छ = स्वल्प। ४ च + छ = प्रवालाद्यं। ५ ख + ग = शतम्। च + छ = रजते शते। ६ च = अष्टौ त्रपुणि। ७ च = पलशते। च = राजतपलशते। ८ च + छ पलद्वयमेव। ९ ख + ग = तावति शुद्धे त्रपुणि सीसे वा। च = तथा तावति शुद्धे त्रपुणि सीसे च। छ = तथा तावति शुद्धे त्रपुणि सीसे वा। १० च = क्षयं वदन् दण्ड्य इत्यर्थः।

(५८) स्थूलसूत्रे[1] कार्पासिके आविके[2] पणशतमिते[3] वसनाय[4] प्रयुक्ते[5] उप्ते[6] दशपलाधिकं वासो भवति । मध्यविधसूत्रे पञ्चपलाधिकं सूक्ष्मसूत्रे त्रिपलाधिक मित्यर्थः ।

---

## अथाप्रकाशतस्करदण्डः ।

(५९) तत्र मनु :—

सन्धिं कृत्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

(६०) व्यास :—

सन्धिच्छेत्ताऽनेकविधं[7] धनं [illegible] वै गृहात् ।
प्रदाप्य स्वामिने सर्वं हृतं शूले निवेशयेत् ॥

(६१) बृहस्पति :—

सन्धिच्छिदो[8] हृतं त्याज्याः शूलमारोपयेत्ततः ।
तथा पान्थमुखे[9] वृक्षे गले बद्ध्वाऽवलम्बयेत् ॥

(६२) सन्धि चौराः स्वापहृतधनानि स्वामिने प्रदाप्य हस्तौ छित्वा तीक्ष्णे शूले निवेश्याः । वाटपाटच्चरास्तु[10] वृक्षादावुद्बन्धनीया इति वर्त्तुलार्थः ।

(६३) बृहस्पतिः—

मनुष्यहारिणो राज्ञा दग्धव्याः[11]स्युः कटाग्निना ।
स्त्रीहर्त्ता लोहशयने दग्धव्या[12] वै कटाग्निना ॥

कटो वीरणः । (६४) एतत्तु[13] कुलीनयोः स्त्रीपुंसोर्हरणे द्रष्टव्यम् ।

---

१ घ=सूक्ष्मे । २ ग+च+छ=आविके वा । ३ च+छ=शतपलमिते । ४ छ=वपनाय । छ=अवपणाय । ५ घ=उप्ते । ६ छ=उक्ते । ७ च=सन्धिछित्वा । ८ क=सन्धिच्छेदो सम्भृत्यांस्तान् । च+छ=सन्धिच्छिदोऽसकृद्‌बुयं ताञ्छूलमारोपयेत्ततः । ९ च+छ=पान्थमुखो । १० च=पाटचौरास्तु । ११ ग+च+छ=दग्धव्यास्तु । १२ च=दग्धव्यो वा कटाग्निना । १३ छ=एतच्च ।

(६५) तदाह मनुः—

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः ।
मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति ॥

मुख्यं मरकतादि ।

(६६) व्यासः—

नरहर्त्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे ।

इदन्तु मध्यमविधपुरुषापहरणे ।

(६७) पुरुषं हरतः प्रोक्तो दण्ड उत्तमसाहसः ।

इदमधमपुरुषापहरणे ।

(६८) सर्वस्वं हरतो नारीं[1] कन्यां तु हरतो वधः ।

इदमपकृष्टनारीहरणं ।

(६९) मनुः—

गोषु ब्राह्मणसंस्थासु तूलिकायाश्च[2] भेदने ।
पशूनां हरणे चैव सद्यः कार्योऽर्द्धपादिकः ॥
महापशूनां हरणे शस्त्राणामौषधस्य च ।
कालमा[illegible]द्य कार्यञ्च राजदण्डं प्रक[illegible]यत् ॥

(७०) [3]कालो युद्धादेः । कार्यमारोहणादि । तेन युद्धाद्यवसरेऽश्वाद्यपहरणमतिदण्डाय । महापशवोहस्त्यश्वादयः ।

(७१) नारदः—

महापशून् [illegible]नयतो दण्ड उत्तमसाहसः ।
मध्यमो मध्यमपशून् पूर्वः क्षुद्रवशौ हृते ।

---

१ ग – नार्याहरणे । छ – नार्यपहरणे । २ क – शूलिकायाश्च । च – छुरिकायाश्च ।
३ छ + क – तूलिकानासाभेदनरन्ध्रकरणम् । च – छुरिका नासाभेदने रन्ध्रकरणे । कालोयुद्धादेः ।

(७२) **व्यवस्था विष्णुवाक्योक्ता ।**

[1]तूलिकाभेदणं नासारन्ध्रकरणम् ।

(७३) **व्यासः—**

**अश्वहर्ता हस्तपादौ कटिं छित्वा प्रमाप्यते ।**

(७४) **याज्ञवल्क्यः—**

**बन्दिग्रहांस्तथा वाजिकुञ्जराणां च हारिणः ।**
**प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ॥**
**कोष्ठागारायुधागारदेवतागारभेदिनः ।**
**हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥**

(७५) **विष्णुः—**

**[2]गवाश्वोष्ट्रगजापहारक एकचरणादिकः कार्यः ।**
**अजाद्युपहार्यैककरश्च करितुरगा[3]वत्यन्तावपकृष्टा शास्यो[4] वाऽगुणवान् ।**

समयो[5] न युद्धस्येत्यतः शान्ति[6]लाघवम् ।

(७६) **व्यासः—**

**पशुहर्त्तुश्चार्द्धपादम[7]तीक्ष्णशस्त्रेण कर्त्तयेत् ।**

तस्यैकं पादं कुण्ठकुद्दा[8]लादिना छिन्द्यादित्यर्थः ।

(७७) **मनुः—**

**अस[9]न्दितानां सन्दाता सन्दितानां विमोक्षकः ।**
**दासाश्वरथहन्ता[10] च प्राप्तः स्याच्चौरकिल्बिषम् ॥**

---

१ घ नास्ति । २ ग+च+छ गोश्वोष्ट्र । ३ ग+च+छ करितुरगावत्रा । ४ ग+च= स्वाम्यो । ५ च+छ समयो वा । ६ च+छ शान्ति । ७ च तीक्ष्णशस्त्रेण कर्त्तयेत् । ८ च कुन्त । ९ च असन्धितानां सन्धाता सन्धितानां विमोक्षदः । १० च हर्ता च ।

(७८) अपहरणार्थं बद्धान् बध्नन् बन्धान्विमोचयन् वा दासोऽन्यतमविनाशी वा चौरवच्छास्यः ।

(७९) **मनुः—**

**अङ्गुलीग्रन्थिभेदस्य छेदयेत्प्रथमागसि[1] ।**
**द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥**

(८०) चौर्यार्थं[2] परपशोर्बन्धनग्रन्थि मोचयनः[3] प्रथमे विमोचने अङ्गुलिच्छेदः, द्वितीये हस्तपादच्छेदः, तृतीये वधः कार्यः ।

(८१) **याज्ञवल्क्य :—**

**उत्क्षेपकग्रन्थिभेदौ करसन्दंशभेदकौ[4] ।**

(८२) यश्चौरार्थं[5] परपशूनभ्याजयति[6] बन्धनं विमोचनम्वा[7] तेषां करोति तस्याङ्गुष्ठतर्जन्यौ छेद्यावित्यर्थः ।

(८३) **बृहस्पतिः —**

**धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः[9] ।**
**शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥**

(८४) प्रमाणस्थपुरुषस्य प्रमाणस्थकरचरणस्य द्वादशभिः प्रसृतिभिः कुडवो भवति । चतुर्भिः कुडवैः प्रस्थः[10] । विंशत्या प्रस्थैः कुम्भ इति **रत्नाकरादयः ।**

(८५) ईदृशकुम्भाः[11][12] पुरुषाहारमानेन खारी इति मैथिलाः ।

(८६) इतोऽधिकं[13] धान्यमपहरन् मारणीयः । न्यूनं त्वपहरन् तत्समं धान्यं स्वामिनि तदेकादशगुणश्च राजनि दण्डत्वेन दाप्य इत्यर्थः ।

---

१ छ – प्रथमागमे । २ च – चोरार्थं । छ – चोर्यार्थं पशोर्वन्धनग्रन्थि विमोचयतः । ३ च – विमोचयतः । ४ च – हीनकौ । ५ च – यश्चौयार्थं । ६ च – परपशूंस्त्याजयति । ७ च – बन्धनं विमोचनम्वा । छ – बन्धनविमोक्षं वा । ८ ग – विमोकम्वा । ९ च – हरतोह्यधिकंवधः । छ – हरतोऽभ्यधिकं । १० छ – प्रस्थोभवति । ११ ग – ईदृश दशकुम्भा । घ + च – तादृशकुम्भा । १२ छ – ईदृशदशकुम्भाश्च । १३ छ – इतोऽभ्यधिकं ।

(८७) अन्येतु—

पलश्च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु[1] बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिःखारी विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्त्तिता ॥

विंशत्या द्रोणैरित्यर्थः[2] ।

एतद्वाक्यानुसारेण च कुम्भमाहुः एतच्च वा[3] १ खारि ४ पूर्ववदिदम् ।

(८८) तथा—

क्षेत्रिक यात्यये दण्डो भागाद्दशगुणो भवेत् ।
ततोऽर्द्धदण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥

(८९) सस्यभागव्यवस्थया भूकर्षकस्य दोषेण सस्यनाशे स्वभागाद्दशगुणस्तस्य दण्डः तद्भृत्यस्य तु दोषेण तन्नाशे स्वभागात्पञ्चगुणः कर्षकस्य दण्ड इत्यर्थः ।

(९०) अयञ्च दण्डो राजग्राह्यः। भूस्वामी तु तद्विनाशितं स्वग्राह्यं सस्यभागं ततो लभत इति द्रष्टव्यम् ।

(९१) काष्ठभाण्डाद्युपक्रम्य नारद :—

तुलाधरिममेयानां[4] गणिमानाञ्च सर्वशः ।
एभिस्तूत्कृष्टमूल्यानां मूल्याद्दशगुणो दमः ॥

तुलाधरिमं कर्पूरादि । मेयं श्रीह्यादि । गणिमं पूगैला प्रभृति । एभिः काष्ठादिभिः । (९२) तेन पूर्वोक्तकाष्ठाद्यपेक्षयाऽधिकमूल्यानां धरिममेय-गणिमानां अन्यतमापहारे तन्मूल्याद्दशगुणो दण्ड इत्यर्थः ।

(९३) मनु :—

तथाधरिममेयानां[5] शतादभ्यधिको[6] वधः ।

---

१ छ – मानेन । २ च + छ = इत्यन्वयः । ३ च + छ – एतच्च वाहः खारी । ४ च – तुलाधरि । ५ च + छ – तुलाधरि । ६ छ – शतादभ्यधिके । ग + च – अभ्यधिके ।

**सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् ॥**
**पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।**
**शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥**

(९४) हेम्नो रजतस्य वा शतकर्षाधिकस्य[1] तथा वाससो वा शताधिकमूल्यस्य[2] हर्त्ता बध्यः । पञ्चाशदधिकस्य[3] तन्मूल्यस्य वा हर्त्ता छिन्नहस्तः कार्यः । तदूनस्य हर्त्ता एकादशगुणं तन्मूल्यं दाप्यः । स्वापहृतवस्तुदानं[4] कल्पत्रयेऽपि ।

(९५) **शंख :—**

**सुवर्णरजतापहारे शारीरोऽङ्गच्छेदो[5] वा ।**

यत्किञ्चित्स्वल्पं सुवर्णं रजतं वा अपहरन्नभ्यर्हितस्ताडनीयस्तदूनश्छिन्नकरणः कार्यः ।

(९६) **विष्णु :—**

**रत्नापहार्य्युत्तमसाहसम् ।**

अपकृष्टरत्नापहारी सहस्रं पणान्दण्ड्य[6] इत्यर्थः ।

(९७) **शंख :—**

**अष्टशतं[7] सीताद्रव्यादिहरणे[8] यथाकालम् ।**

सीताद्रव्यं हलकुद्दालादिकं कृषिसमयेऽपहरन् अष्टाधिकं पणशतं दण्ड्यः[9] हृतञ्च दाप्यः ।

(९८) **मनु :—**

**परिपूतेषु धान्येषु शाकमूलफलेषु च ।**
**निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमम्[10] ॥**

---

१ क - वर्षाधिकस्य । ग - पलाधिकमूल्यस्य । च - शतपलाधिकस्य । २ च - शताधिकस्य हर्त्ता बध्यः । ३ ग - पञ्चाशदधिकस्य तु तस्य हर्त्ता छिन्नहस्तः कार्यः । छ - पञ्चाधिकस्य तु तस्य हर्त्ता छिन्नहस्तः कार्यः । ४ ग - दानमूल्यन्तु । च - दानन्तु । ५ क - छेदः । ६ छ - पणान् दण्डः । ७ च अष्टगुणं सीताद्रव्यापहरणे । ८ ग - द्रव्यापहरणे । छ - द्रव्याभिहरणे । ९ छ - अष्टाधिकं शतं दण्ड्यः । १० ग । छ - शतं दमः ।

निःपुलाकीकृतेषु खलस्थेषु स्वल्पधान्येष्वपहृतेषु शाकमूलफलेषु वा तत्स्वामिसम्बन्धशून्यः शतं, तत्सम्बन्धवांस्तु पञ्चाशतं पणान् दण्ड्यः ।

यथा[1]—

(९९) पुष्पे हरितधान्ये[2] च गुल्मवल्लीनगेषु च ।
अल्पेष्वपरिपूतेषु दण्डः स्यात्पञ्च कृष्णलाः ॥

कुसुमादौ तथा हरितधान्ये घासरूपे तथा तावन्न्मूनेषु सपुलाकेषु खलस्थधान्येषु[3] गुल्मे लतायां वृक्षे वा ऽपहृते[4] सुवर्णे माषो दण्डः ।

(१००) व्यास :—
स्वल्पधान्यापहरणे[5] क्षीरे तद्विकृतौ तथा ।
स्वामिने तत्समं दाप्यो दण्डञ्च द्विगुणं नृपे ॥

मनुः—

(१०१) सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैणवभाण्डानां लवणानां तथैव च ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम् ॥
अन्येषामेवमादीनां मद्यानामोदनस्य च ।
फलानाञ्चैव[6] सर्वेषां हरणे द्विगुणो दमः ॥

इदमल्पसूत्रादिहरणे ।

(१०२) यश्चैतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः ।
तं शतं दण्डयेद्राजा यश्चाग्निं चोरयेद् गृहात् ॥

एतानि सूत्रादीनि उपभोगार्थं संस्कृतानि । अग्निं श्रौतं स्मार्त्तं वा ।

---

१ क + च + छ तथा । २ छ - घासरूपधान्ये । ३ च धान्येषु तथा । ४ च - अपहृतेषु ।
५ च + छ = अल्प । ६ क - बालानाञ्चैव ।

(१०३) नारद :—

काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥
शाकानामार्द्रमूलानां हरणे फलपुष्पयोः ।
गोरसे[1] तद्विकाराणां तथा लवणतैलयोः ॥
पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च ।
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः ॥

इदं प्रचुरकाष्ठादिविषयम् ।

(१०४) मनु :—

यस्तु रज्जुघटं कूपात् हरेच्छिन्द्याच्च[2] यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्समाहरेत् ॥

रज्जुघटं[3] वा कूपाद्यो हरति स कूपे तन्नियोजयेत् । माषश्च दण्डं प्रपाभेदे च दद्यात् ।

(१०५) विष्णु :—

अनुक्तद्रव्याणामपहर्त्ता मूल्यसमं दमम् ।

दाप्य इत्यनुषङ्गः ।

(१०६) नारद :—

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डस्तेयेषु द्रव्येष्वयमनुक्रमात्[4] ॥

(१०७) अनुक्तविशेषेषु उत्तममध्यमाधमेषु वस्तुष्वियं व्यवस्था ।

(१०८) कात्यायन :—

येन केन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यात्तत्तन्नृपस्तस्य न करोति यथा पुनः ॥

---

१ च = गोरसेक्षुविकाराणां । २ ग + च + छ = हरेच्छिन्द्याच्च । ३ ग + च + छ = रज्जुं घटमिति समाहारे द्वन्द्वः । ४ ग + च + छ = द्रव्येषु त्रिष्वनुक्रमात् ।

(१०९) **बृहस्पति :—**

**तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।**
**अनापृच्छ्य[1] तु गृह्णानो हस्तच्छेदनमर्हति ॥**

इदमप्युत्कृष्ट[2]स्वामिकतृणादिविषयम् ।

(११०) **गौतम :—**

**ब्राह्मणस्य न शारीरो दण्डः । कर्मवियोगविख्यापन विवासनाङ्ककरणानि । आवृत्तौ[3] प्रायश्चित्ती सः ॥**

(१११) कर्मवियोगश्चौरेण ब्राह्मणेन सह सद्भिः कापि[4] क्रिया न कर्त्तव्या विख्यापनं खरारोहणादिना[5] चौरत्वन्तस्य ख्यापनीयम् । विवासनं देशाद्बहिःकरणम् । अङ्ककरणं ललाटे चौरचिह्नकरणम्[6] । (११२) आवृत्तौ प्रायश्चित्ती सः प्रकारान्तरेण जीवनाक्षमो ब्राह्मणश्चौरोपि सन् न हस्तच्छेदादिना दण्ड्यः । किन्तु हृतं[7] वस्तु दत्वा चौर्यप्रायश्चित्तं कुर्यादित्यर्थः ।

(११३) **आपस्तम्ब :—**

**पुरुषबधस्तेयभूम्यादानेषु[8] बध्यः चक्षुर्निरोधश्चैतेषु ब्राह्मणस्य ।**

स्तेयं सुवर्णहरणम् । एतेषु[10] त्रिपु ब्राह्मणेतरस्य[11] बधः[9] । ब्राह्मणस्य तु[12] चक्षुरुत्पाटनम् । इदमधमब्राह्मणपरम् ।

(११४) **नारद :—**

**अन्यायोपात्तवित्तत्वाद्धनं[13] तेषां मलात्मकम् ।**
**ततस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥**

तान् ब्राह्मणेतरचौरान् ।

---

१ च अनापृच्छंस्तु । २ ग इदमत्युत्कृष्ट । ३ छ स्ववृत्तौ प्रायश्चित्तो तु सः । ४ क—कश्चित्क्रिया । ५ छ खरारोहादिना । ६ च चौरचिह्नकरण । छ चौरचिह्नकरणमङ्ककरणम् । ७ ग । छ तच्चौर्यं । ८ छ पुरुषबधेषु स्तेयभूम्यादानेषु । ९ च बधः । १० क—एषु त्रिषु । ११ च ब्राह्मणेतरबधः । १२ छ ब्राह्मणस्य चक्षुरुत्पाटनम् । १३ च—धनमेषां ।

(११५) शंखः—

[1]ब्राह्मणस्य मूत्रमौण्ड्यमितरेषां खरयानम् ।

ब्राह्मणस्य यागादिपरस्य । इतरेषां क्षत्रादीनां मध्यमानां ब्राह्मणानाञ्च ।[2]

(११६) विष्णुः—

स्तेनाः सर्व[3] एवापहृतं धनिकस्य धनन्दाप्याः[4] तेषामभिहितदण्डप्रयोगः ।

(११७) याज्ञवल्क्यः—

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्[5] ॥

चिह्नं ललाटे भगाद्यङ्कनम् । इदं मध्यविधब्राह्मणपरम् ।

(११८) ब्राह्मणाधिकारे कात्यायनः—

सहोढमसहोढं वा स[6]त्वागमितसाहसम् ।
प्रगृह्याच्चिह्नमात्रेय सर्वस्वेन वियोजयेत् ॥
[7]स्वयं सन्दानगुप्ताश्च मन्दभक्ता गुणान्विताः ।
कुर्युः कर्माणि नृपतेरामृत्योरिति कौशिकः ॥

[8]सहोढं लोप्त्रं । (११९) सर्वस्वेनेति इदन्तु वृत्तस्वाध्यायरहितधनवद्ब्राह्मणपरम् । निगडबन्धनकिञ्चिद्भक्ष्यदानराजदास्याचरणन्तु तादृशनिर्द्धन ब्राह्मणपरम् ॥

(१२०) बृहस्पतिः—

वृत्तस्वाध्यायवान्स्तेयी बन्धनात् क्लिश्यते चिरम् ।
स्वामिने तद्धनन्दाप्यः प्रायश्चित्तन्न[9] कार्यते ॥

याज्ञवल्क्यः[10]—

(१२१) अष्टापाद्यञ्च शूद्रस्य स्तेये भवति किल्विषम् ।

---

१ ख - ब्राह्मणस्य मौण्ड्य । छ ब्राह्मगस्य तु । २ छ - इतरेषां क्षत्रादीनां मध्यमानाम् । ३ छ - सर्वोपि हृतं । ४ ग दाप्यास्ततः । च । छ ततस्तेषां । ५ च - खरोष्ट्रात् । ६ ग + च + छ - सत्वागमित । ७ च अयः सन्धानगुप्ताश्च । छ अयः सन्दान । ८ क होढं लोप्त्रम् । ९ ग प्रायश्चित्तं च । छ - प्रायश्चित्त स कार्यते । १० घ - मनुः ।

[1]षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं चापि शतं भवेत् ।
द्विगुणा[2] च चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥

(१२२) तद्दोषगुणविदिति सर्वान्वितं[3] तेन यत्र स्तेये यो दण्ड उक्तः स स्तेयदोषगुणज्ञस्य शूद्रस्याष्टगुणस्तादृशवैश्यस्य षोडशगुणस्तादृशक्षत्रियस्य द्वात्रिंशद्गुणः तादृशब्राह्मणस्य चतुःषष्टिगुणः ततोऽप्यधिकगुणस्य ब्राह्मणस्या[4]ष्टाविंशत्यधिकशतगुण इत्यर्थः ।

## अथ स्तेनातिदेशः ।

(१२३) तत्र मनुः —

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥

अदानेन गृह्णन्तीत्यदत्तादायिनस्तस्कराः ।

(१२४) तथा—

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य[5] हन्याच्चौरानिवेश्वरः ॥

अग्निरत्र चौर्यानुकूलः भक्तं चौरभक्ष्यम् । शस्त्रं चौर्याङ्गम् । अवकाशः चौराय[6] स्थानम् । सन्निधातॄन् चोरचोरयितव्यद्रव्ययोः सन्निधापकान् ।

(१२५) याज्ञवल्क्यः—

भक्तावकाशाग्न्युदकं मन्त्रोपकरणव्ययान् ।
कृत्वा चोरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥

---

१ छ – षोडशस्य तु । २ ग द्विगुणा चतुः । च । छ – द्विगुणा वा । ३ छ सर्वं चान्वितम् । ४ ग ब्राह्मणस्य शतगुणस्ततोऽप्यधिकगुणस्य ब्राह्मणस्याष्टाविंशत्यधिक । ५ ख – मोष्यस्य । ६ च । छ अवकाशश्चौरस्थानम् ।

(१२६) अग्न्युदकं चौर्योपष्टम्भकम् । मन्त्रश्चौर्योपायोपदेशः । उपाकरणं चौर्यसाधनं खनित्रादि । व्ययोऽपहर्तुं गच्छतः पाथेयं जानतश्चौरं ज्ञात्वैवं करण उक्त दण्डः । हन्तुरप्येवं कुर्वतस्तादृशो दण्डः ॥

(१२७) नारदः—

**भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम् ।**
**शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥**

ये भक्ताद्यन्यतमं चौराय ददति ये वा धारणक्षमा अपि चौरं जहति तेऽपि चौरवद्दण्ड्याः ।

(१२८) **आह्वायकादेशकरास्तथा चान्तरदायकाः ।**
**समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥**

ये चौरान् आकारयन्ति आदिशन्ति वा स्थाने स्थापयन्ति वा धनिकाऽनुसृतान् गोपयन्ति वा ते सर्वे चोरसमाः ।

(१२९) कात्यायनः—

**क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ।**
**समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तान् ॥**

चोरितद्रव्याणां तथा ज्ञातानां क्रेता ग्रहीता संगोप्ता च चौरसमदण्ड्य इत्यर्थः ।

(१३०) हन्यादित्यनुवृत्तौ विष्णुः—

**प्रसह्यतस्कराणामवकाशभक्तप्रदांश्चान्यत्र राजा[illegible]क्तेः ।**

राजा चेच्चौरनिराकरणाक्षमस्तदा चौराय स्वरक्षार्थं भक्तादिदानेऽपि न दोषः ।

१ च - अग्न्युदकम् । २ छ मन्त्रं चौर्योपायो । ३ ग । छ । च कुर्वतामीदृशो दण्डः । ४ च - आह्वायका आदेशकास्तथावकाशदायकाः । ५ च - आह्वयन्ति । ६ च - धनिकानुमतान् । ७ छ - तेऽपि । ८ च - क्रेतारश्चौर । ९ ग दण्डा इत्यर्थः । च । चौरवद्दण्ड्या इत्यर्थः । १० छ - स्वरक्षणार्थं । ११ च - भक्षणादि न दोष इत्यर्थः । १२ ग + छ - न दोष इत्यर्थः ।

(१३१) मनु :---

राष्ट्रेषु रक्षाधिकृतान् सामन्तांश्चैव देशितान् ।
अभ्यागतेषु मध्यस्थान् शिक्ष्याच्चौरानिव द्रुतम् ॥[1]

देशावेक्षकस्तादृश एव सामन्तोऽप्यवेक्षायामुदासीनो भवन् चौरवद्दण्ड्य इत्यर्थः ।

(१३२) तथा----

ग्रामघातेहिताभङ्गे पथि मोषाभिदर्शने ।
शक्तितोऽनभिधावन्तो निर्वास्याः सपरिच्छदाः ॥

(१३३) ग्रामघाते ग्रामोपद्रवे ईहिताभङ्गे ईहितस्य कृतस्य सस्योत्पत्त्यनुकूल बन्धादेर्विदारणे[2] चोरितद्रव्यस्य चोरहस्तस्थस्याध्वनि दर्शने वा यथाशक्ति प्रतीकारमकुर्वाणो[3] अनियुक्तोपि सधनो देशान्निःसार्यः ।

## अथ चौर्यापवादः[4] ।

(१३४) द्विजोऽध्वगः[5] क्षीणवृत्तिः द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डन्दातुमर्हति ॥

क्षीणवृत्ति पाथेयशून्यः ।

(१३५) वानस्पत्यं मूलफलं[6] दार्वग्न्यर्थं तथैव च ।
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥

(१३६) फलानि अन्यापरिगृहीतानि "फलानि चापरिगृहीतानि" इति गोतमवचनात् । तथा होमाग्निसन्दीपनाय परेन्धनं तथा गोग्रासार्थं परतृणं ग्राह्यम् ।

---

१ च – शिख्याच्चौरा । छ शिख्याच्चौरमविद्रुतम् । २ बन्धस्य विदारणे । ३ च – शक्तितत्प्रतीकार । ४ चौरापवादः । ५ ग । छ – मनुः । ६ क – फलमूलम् ।

(१३७) राजकृत्ये आपस्तम्बः—

ग्रामेषु नगरेष्वार्य्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् । तेषां पुरुषास्तथा गुणा एव ।

सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् । क्रोशो ग्रामेभ्यः ग्रामनगरयो रक्षकाः साधुसहायाः साधवः कार्याः ।

(१३८) तैश्च नगरात्परितो भूमौ योजनमितायां नगरे च यच्चौरैरपहृतं तद्देयम् । एवं ग्रामरक्षकेण ग्रामे क्रोशमिते तत्परिसरेऽपीत्यर्थः ।

(१३९) कात्यायनः—

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पालान् यदि चौरो न लभ्यते ॥

(१४०) गृहेष्वित्युपलक्षणम् । यदि चौरोऽन्विष्यमाणो न लभ्यते तदा तदनुसन्धायकद्वारा आरक्षकद्वारा देशपतिद्वारा वा चोरितधनं राजा दापयेदित्यर्थः । आरक्षकः कोटवार इति प्रसिद्धः । देशपतिस्तद्देशरक्षाधिकृतः ।

(१४१) कात्यायनः—

ग्रामान्तेषु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं चौरोद्धर्त्रा विवीतके ॥

विवीते अरण्ये । स्वामिना राज्ञा चौरोद्धर्त्रा चौराश्रयभूतेन विवीतके क्षेत्रादौ ।

(१४२) तथा—

स्वदेशे यस्य यत्किञ्चित् हृतं देयं नृपेण तत् ।
गृह्णीयात्तत्स्वयं नष्टं प्राप्तमन्विष्य पार्थिवः ॥

१ छ- नगरेषु चार्यान् । २ छ- पुरुषा एव तथा गुणाःस्युः । ३ छ ससहायाः । ४ घ—साधव एव कार्याः । ५ छ ग्राम । ६ छ ग्राहांश्च । ७ छ द्वारा वा देशपति वा । ८ घ—कोटाल इति । ९ छ- भूतेनाविवीते ।

**चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।**
**तदभावे तु मूल्यं स्यादन्यथा किल्विषी नृपः ॥**
स्वरूपं तदेव वस्तु ।

(१४३) **बृद्धमनु :—**
**यस्मादपहृताल्लब्धं द्रव्यात्स्वल्पन्तु स्वामिना ।**
**तच्छेषमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ॥**

(१४४) मुषितद्रव्यादल्पं स्वामिना यस्मात् पुरुषाल्लब्धं भवति तच्छेषमपि स्वामी तत एव प्राप्नुयात् । किन्तु स्वामिना शेषांशे चौराननुमते चौर्यगतत्वे शपथे कृते सतीत्यर्थः । (१४५) यदि तु चोरत्वाभिमतस्य शेषानपहारे प्रमाणन्नास्ति तदोक्ता व्यवस्थेति द्रष्टव्यम ।

(१४६) **याज्ञवल्क्य :—**
**शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।**
**अर्वाक् संवत्सरात्स्वामी हरेत्तु परतो नृपः ॥**
शौल्किको रक्षाधिकारी । स्थानपालो देशपतिः । अनास्थायां वाकारः । नष्टं अनवधानगतम् । अपहृतं वा चौरेण । (१४७) तेनाऽयमर्थः । नष्टमपहृतं वा वस्तु केनाऽपि तदस्वामिना समानीतं राज्ञा वर्षपर्यन्तं धारयितव्यम् । तदभ्यन्तरे स्वामी चेदभ्येति तदा स एव नो चेद्वर्षोपरि तद्देशराजस्तद्गृह्णीयादिति ।

(१४८) **मनु :—**
**प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् ।**
**यांस्तत्र चौरान्गृह्णीयात् तान्राजेभेन घातयेत् ॥**
तत्र राजपुरुषै रक्ष्यमाणे तद्धने इभेन हस्तिना ।

१ छ — प्रतिदापयेत् । २ क — कृतः । छ — नरः । ३ ग + च + छ — शेषांशे चौरविमते । ४ च — शेषांशे चौरविमते चौरगतत्वेन । ५ च + छ — शेषापहारे । ६ च — हरेत्तत्परतो नृपः । ७ छ — स्वामीचेदायाति । ८ क — तिष्ठेत्युक्तै । ९ क — अथ ।

## अथ साहसम् ॥ १४ ॥[1]

(१) तत्र नारदः—

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते ॥

तथा—

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र कीर्त्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥

(२) रक्षितुर्ज्ञाने सत्येव बलेनाधिः[2]पीडनं यत् तत्साहसं छलेन तज्ज्ञानावरणेन य आधिर्यत् पीडनं तत्स्तेयमित्यर्थः ।

(३) तद्विभजते स एव—

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपावमर्दाद्यैः[3] प्रथमं साहसं स्मृतम्[4] ॥
वासः पश्वन्नपानानां[5] गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदारप्रधर्षणम्[6] ।
प्राणोपरोधि[7] यच्चान्यदुक्तमुत्तमसाहसम् ॥

(४) अत्राद्ये[8] मनुः—

क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च ।
विनाशयन्हरन् दण्डः शताद्यमनुरूपतः ॥

---

१ छ अथ साहसप्रकरणम् । २ छ आधिर्यत्पीडनं तत्स्तेयमित्यर्थः । ३ ग = क्षेपोपमर्दाद्यैः । छ क्षेपापमर्दाद्यैः । ४ छ परदारप्रधर्षणम् । छ प्राणोपरोधि यच्चाद्यमध्यमोत्तमसाहसम् । ५ च पशूनामन्नपानानां । ६ च – परद्वाराभिमर्षणम् । ७ च – प्राणापरोधि । ८ ग आद्ये । छ – तत्राद्ये मनुः ।

मध्यमे स एव—

पशुवस्त्रान्नपानादिगृहोपकरणन्तथा ।

हिंसयन्[1] चोरयन्दाप्यो द्विशताद्यं दमन्तथा ।

उत्तमेपि—

स्त्रीपुंगोहेमरत्नानि देवविप्रधनन्तथा ।

कौशेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः ॥

द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।

हर्त्ता[3] वा घातनीयः[4] स्यात् प्रसङ्गविनिवृत्तये ॥

क्षेत्रोपकरणं हलादि । गृहोपकरणं शिलापट्टादि शताद्यं शतावरम् ।

(५) नारद :—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।

मध्यमस्य तु शास्त्रज्ञैर्दृष्टःपञ्चशतावरः ॥

वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥

तदङ्गच्छेद इत्युक्तो दण्ड उत्तम साहसे ।

स्यातां संव्यवहार्य्यौ द्वौ धृतदण्डौ तु पूर्वयोः ॥

धृतदण्डोऽप्यसम्भाष्यो ज्ञेय उत्तमसाहसे ।

(६) तदयं संक्षेपः । अल्पस्य धनस्यापहरणे[5] विनाशने वा शताद्यो दमः[6] । क्षेत्रमेत्रादेस्तु चौर्येण साहसेन वा विनाशने विनाशितसमं[7] धनं चोरः साहसी वा धनस्वामिने[8] दाप्यः । हीनपुरुषस्तु द्विगुणं दण्ड्यः । उत्तमसाहसी तु दण्डेन विना शोधितोऽपि[9] न व्यवहारादिरूपसम्बन्धवान् कार्य इति ।

(७) मनु :—

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतो ऽपि वा ।

---

१ छ - हिंसयंश्चोरयन् । २ क सहस्र । ३ छ हर्तारो । ४ छ - घातनीयाःस्युः । ५ छ धनस्य हरणे । ६ छ दण्डः । ७ च - विनाशितधनं । ८ च - स्वामिनि दाप्यः । ९ ग + छ - दण्डेन विशोधितोपि ।

स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥

(८) याज्ञवल्क्य :—

सामान्यप्रभवद्रव्यहरणात्साहसं स्मृतम् ।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे च चतुर्गुणः ॥

सामान्यप्रभवं सामान्यप्रभुत्वविषयः । परस्वमिति यावत् ।

तथा—

अभिघाते तथा भेदे छेदे कुड्याभिघातने ।
पणान्दाप्यः पञ्चदश विंशतिं तद्द्वयं तथा ॥

(९) परकीयकुड्यस्याभिघातने शिथिलीकरणे पञ्चदशपणाः । भेदे बन्धशिथिलीकरणे विंशतिः । छेदने द्विधाकरणे तथा विमर्दने उभयत्रापि तथा चत्वारिंशत्पणाः दण्डम् । तत्सज्जीकरणञ्च **"स तस्योत्पादयेत्तुष्टिम्**" इतिवचनात् ।

(१०) चर्मचार्मिकभाण्डेषु काष्ठलोष्टमयेऽपि च ।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च ॥

चार्मिक उपानहादि प्रथमचर्मपदं स्पष्टार्थम् । काष्ठमयं तण्डुलादिमापनम् । लोष्टमयं घटादि । (११) एषु सहसा विनाशितेषु मूल्यपञ्चगुणो दण्डः । यस्तु पुष्पादौ शतावरो दण्डो **मनूक्तः** सोतिप्रशस्तपरः । स्वामितोषस्तु सर्वत्र ।

---

१ छ प्राभवद्रव्य । २ छ प्राभवं । ३ च अवघाते । ४ छ कुड्यावघातने । ५ छ पणा दाप्यः । ६ ग अवघाते । च परकीयकुड्यावघाते । छ परकीयकुड्याभिघाते । ७ छ विंशतिम् । ८ छ छेदे द्विधाकरणे । ९ च विमर्दे अभिघातने उभयत्र चत्वारिंशत्पणा दण्डः । छ विमर्दे अवघातने । १० च उभयत्र । ११ छ दण्डः । १२ ग + च + छ मनुवचनात् । १३ च लोप्ट्रमये । १४ ग + च + छ उपानदादि । १५ च लोष्ट्रमयं । १६ च साहस । १७ च स्वमूल्यपञ्चगुणो दण्डः । १८ छ पुष्पमूलफलेषु च । १९ ग + च + छ प्रशस्तपुष्पादिपरः ।

(१२) कात्यायन :—

क्षतं भङ्गावमर्दौ[1] वा कुर्याद्द्रव्येषु यो नरः ।
प्राप्नुयात्साहसं पूर्वं[2] द्रव्यभाक् स्वाम्युदाहृतः ॥

क्षतं किञ्चिन्नाशः । भङ्गोऽर्द्धनाशः । अवमर्दः सर्वनाशः । द्रव्यमिह स्फटिकादयः[3] । द्रव्यभाक् स्वामिने च स्फटिकादि देयमित्यर्थः ।

(१३) याज्ञवल्क्य :—

दुःखोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं[4]स्तथा ।
षोडशाद्यः पणान्दण्ड्यो[5] द्वितीयो[6] मध्यमं दमम् ॥

दुःखोत्पादि कण्टकादि । प्राणहरं सर्पादि । परगृहे क्षिपन् आद्यः षोडशपणान् द्वितीयो मध्यमसाहसं दण्ड्य इत्यर्थः ।

(१४) विष्णु :—

गृहकुड्यादिभेत्ता मध्यमसाहसं तच्च योजयेत् ।

पर[7]गृहभित्त्यादेरभिदारको मध्यममाहसं राज्ञा दण्ड्यः । भग्न[8]ञ्च भित्त्यादिकं पूर्ववत्कुर्यादित्यर्थः ।[9]

(१५) तथा—

गृहे[10] पोडाकरं द्रव्यं प्रक्षिपन् पणशतम् ।

पीडाअत्रोत्कटाभिमता[11] ।

(१६) याज्ञवल्क्य :—

अभ्याक्रोशाऽतिक्रमकृद्भ्रातृभार्याप्रहारकः[12] ।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकः[13] ॥
सामन्तकुलिकादीनामाकारस्या[14]प्यकारकः[15] ।

१ छ—भङ्गोवमर्दौ वा । २ च—मर्दौं वा । ३ च+छ—स्फटिकादि । ४ च+छ—हरं तथा । ५ च—पणा दण्ड्या । च—पणान्दाप्यो । ६ छ—द्वितोये । ७ छ—गृहे । ८ च+छ—स्वभग्नञ्च । ९ च—स पूर्ववत् । १० छ—गृह । ११ च—पीडाश्चोत्कटा । छ—पीडाचोत्कटाभिमता । १२ च—प्रहारदः । १३ च—ग्रहभेदकः । १४ च—आह्वानस्याप्यकारकः । १५ छ—प्रकारकः ।

पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः[1] ॥
स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधायकः ।
अकारणे[2] च विक्रोष्टा चाण्डालश्चोत्तमान्स्पृशन् ॥
शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये[3] च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥
वृक्षक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकः ॥
पितापुत्रसुहृद्भ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितानाञ्च त्यागाच्च[4] शतदण्डभाक् ॥

(१७) अर्घ्य आचार्यादिः[5] । तस्याक्रोशमतिक्रमं वा यः करोति । प्रहारस्ताडनम् । सन्दिष्टं प्रस्थापितम् । समुद्रं मुद्रासहितं गृहम् । सामन्ताः प्रतिवेशिनः । कुलिकाः सकुल्याः । माङ्गल्यादौ[6] एतेषामनाह्वायकाः[7] । एते पञ्चाशतं पणान्दण्ड्याः । स्वच्छन्देति । अनियुक्तः सन् विधवाभिगन्ता । अयन्त्वनियोगहेतुको दण्डः । व्यभिचारहेतुकस्त्वन्य एव विक्रुष्टे चौराद्याक्रान्तैराह्वाने कृतेऽनभिधायकः प्रतिवचनाप्रदाता अयुक्तं[8] शपथं मातरमभिगच्छामीत्यादिरूपम् । अयोग्यः अक्षमः । योग्यकर्म यागादि । तेन यो यत्कर्म कर्त्तुन्न शक्नोति स चेत्तत्कर्म कर्त्तुं[9] प्रवर्त्तते तदा दण्ड्यः । वृक्षस्य पुंस्त्वं फलार्ज्जनम् । औषधादि[10] तदुपघाती । साधारणम् । अन्यसाधारणं[11] धनमसाधारणी कृत्य गृह्णन् पितापुत्रयोः सुहृदोः भ्रात्रोर्द[12]म्पत्योराचार्यशिष्ययोर्मध्ये त्यागबीजदुष्कर्माभावे अन्योन्यत्यागी । एतेषां पणशतो[13] दण्डः ।

---

१ छ - विनिर्णयः । २ च अकारणेन । ३ च - पैत्रे । छ पैत्र्ये । ४ ग + च + छ - त्यागी । ५ ख = अर्घ्यादिः । ६ च - मङ्गलादौ । ७ च + छ - अनाह्वायकः । ८ क = अनुक्तं । ९ च + छ - तत्कर्त्तुं । १० छ - औषधादिना तदुपघाती । ग + च + छ = साधारणेति । ११ च - साधारण । १२ च = भ्रात्रोश्च । १३ ग - पणशतं प्रत्येकं दण्डः । च = प्रत्येकं शतपणं दण्डः ।

(१८) मनु :—

**न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।**
**त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ।**

स्त्री भार्या । त्यागो विहितभरणपोषणाद्यकरणम् ।

(१९) एतानेव प्रकृत्य शंख :—

**यस्त्यजेत्कामात् स द्विशतं दण्डं प्राप्नुयात् ।**

(२०) अत्र **याज्ञवल्क्योक्तो** दण्डोऽविदुषोरन्योन्यत्यागे । **मनूक्तस्त्व** विदुषैव कामादेकतरस्य विदुषस्त्यागे । **शंखोक्तस्तु** कामादविदुषै-कतरस्य त्याग इति सम्प्रदायः । एवं विदुषोरन्योन्यत्यागेप्यूह्यम् ।

(२१) शंख :—

**मातापित्रोर्गुरोश्चातिक्रमेऽङ्गच्छेदः ।**

अतिक्रमस्ताडनम् । येनाङ्गेन ताडयेत्तच्छेद इत्यर्थः ।

(२२) विष्णु :—

**अभक्ष्येण ब्राह्मणं दूषयिता षोडश सुवर्णान्, जात्य-पहारिणा शतं सुरया वद्ध्यः । क्षत्रियं दूषयितुस्तदर्द्धं वैश्यं दूषयितुस्तदर्द्धम् ।**

अभक्ष्यं विष्ठादि । जात्यपहारि लशुनादि । सुरा प्रसिद्धैव । तदर्द्धन्तदर्द्धमित्यनयोरव्यवहितस्तत्पदार्थः । इदमुत्कृष्टब्राह्मणादि विषयम् ।

---

१ छ—राज्ञो । २ छ पुत्रादीन् यस्त्यजेत् । ३ च त्यजेत । ४ ख अन्यत्र । छ तत्र । ५ च + छ अविदुषैकतरत्यागे । ६ छ त्यागेपूह्यम् । ७ ग अभक्ष्येण ब्राह्मस्य दूपयिता । च अभक्ष्येण ब्राह्मणं दूषयितुः । छ ब्राह्मणं दूपयित्वा । ८ छ दूपयित्वा । ९ छ—दूषयित्वा । १० छ तदर्द्धमित्यनयोः । ११ च—उत्कृष्टादि । १२ ख परम् ।

तदर्द्धन्तदर्द्धमित्यनयोरव्यवहितस्तत्पदार्थः[1] । इदमुत्कृष्टब्राह्मणादि[2] विषयम्[3] ।

(२३) **याज्ञवल्क्य :—**

**द्विजं प्रदूष्याभक्ष्येण दण्ड उत्तमसाहसः ।**

**क्षत्रियं मध्यमो वैश्यं प्रथमः शूद्रमार्द्धिकम्[4] ॥**

शूद्रस्याभक्ष्यं कपिलादुग्धादि । आर्द्धिकं[5] पणानां सपादं शतम् । इदमनुत्कृष्ट[6]ब्राह्मणादिपरम्[7] ।

(२४) **मनु :—**

**अभक्ष्यमथवापेयं वैश्यादीन् ग्रासयन्द्विजान्[8] ।**

**जघन्यमध्यमोत्कृष्टान् दण्डानाहुर्यथाक्रमम्[9] ॥**

**पणाः शूद्रे भवेद्दण्डः चतुः पञ्चाशदेव तु ।**

इदमत्यधमशूद्रविषयम्[10] । **अन्यद्याज्ञवल्क्यवत् ।**

(२५) **विष्णु :—**

**जातिभ्रं[11]शकरस्याभक्ष्यस्य[12] भक्षयिता विवास्यः ।**

स्वयं लशुनादिभोक्ता ब्राह्मणो देशाद्बहिःकार्य इत्यर्थः ।

(२६) **याज्ञवल्क्यः—**

**जारं चौरेत्यभिवदन् दाप्यः पञ्च शतं दमम् ।**

**उपजीव्यधनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥**

कुलाऽकीर्त्तिभयात्[13]स्वरूपतो जारं चौरत्वेन निर्दिश्य[14] जारापह्नवं कुर्वन्[15]

---

१ छ – तदर्द्धमित्यनयोः । २ च – उत्कृष्टादि । ३ ख – परम् । ४ क – मर्द्धिकम् । छ – मर्द्धकम् । ५ छ – अर्द्धकम् । ६ ग इदमुत्कृष्ट । ७ ग – विषयम् । ८ च – ग्रासयेद्द्विजान् । छ – ग्रासयन्द्विजान् । ९ क दण्ड्यानर्हं यथा । १० च – विषयवत् । ११ च – ध्वंसकर । १२ छ – भक्षस्य । १३ छ – भयाच्च रूपतो । १४ ग + च + छ विनिर्दिश्य । १५ – कुर्वन् जनः पणानां ।

पणानां पञ्चशतीमुत्कोचमादाय तं त्यजन् पणानां पञ्चशतीमष्टगुणान्दण्ड्य इत्यर्थः । उत्कोचमष्टगुणमिति त्वन्ये ।

(२७) तथा—

**मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।**
**राजयानाऽऽसनारोढुर्दण्डो मध्यमसाहसः ॥**

मृताङ्गलग्नं, मृतककम्बलादि । तत्तथात्वेनाप्रकाश्य विक्रेतुः । राज-यानाद्याऽऽरोहणं राजाज्ञां विनेत्यर्थः ।

(२८) मनुः—

**अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः ।**
**मूलकर्मणि चानाप्ते कृत्यासु विविधासु च ॥**
**अदूषितानां द्रव्याणां दूषणे भेदने तथा ।**
**मणीनामपवेधे तु दण्डः प्रथमसाहसः ॥**
**यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।**
**तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥**

(२९) अभिचारेति । अनपराधिनं प्रति श्येनादिकर्त्तुः । भैषज्यकर्म चानाप्ततया कुर्वतः स्वाऽऽरोग्यामुच्चाटनादिरूपाश्च कृत्यां कुर्वतो द्विशतो दमः । यः सद्द्रव्यमसद्द्रव्यमेलनेन मन्दीकरोति भेदनानर्हं मण्यादि भिनत्ति वा वेधार्हमपि मुक्तादि मन्दप्रवेशे विध्यति तस्य सार्द्धं द्विशतरूपो दमः। यस्तु शूद्रादिः क्षत्रादिचर्यया जीवति तस्य सर्वस्वहरणविवासने दमः ।

---

१ छ—पञ्चशती उत्कोचा । २ छ—आदाय तु तं त्यजन् । च— उत्कोचामादाय त्यजन् । ३ च+छ—अष्टगुणामित्यर्थः । ४ ग—उत्कोचा । च—उत्कोचाष्ट । छ उत्कोचामष्टगुणा-मित्यन्ये । ५ ग—मपहारे तु । ६ च अभीति । ७ च अनपराधं प्रति श्येनादियागकर्त्तुः । ८ छ—श्येनादियागकर्त्तुः । ९ च—भेदनानर्हं मण्यादि वा भिनत्ति । १० छ—भेदनार्हमपि । ११ ग+च । छ—प्रदेशे । १२ च—दण्डः । १३ छ—क्षत्रियादि ।

(३०) याज्ञवल्क्य :—

विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः।

[१]विप्रलिङ्गधारणेन जीविकां कुर्वतः।

(३१) मनु :—

संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः।

प्रतिकुर्याच्च तत्सर्वं दद्यात्पञ्चशतानि [३]तु॥

संक्रमः साकम [४]इति प्रसिद्धः। ध्वजो देवस्य गरुडध्वजादिः। यष्टिर्हट्टादिचिह्न[५]भूता। प्रतिमा [६]देवस्य। एतदन्यतमस्य यो विनाशं [७]करोति स पञ्चशतानि दण्ड्यः। प्रतिकुर्यात् सज्जीकुर्यादित्यर्थः।

(३२) कात्यायन :—

हरे[८]च्छिन्द्याद्दहे[९]च्चापि देवानां प्रतिमां यदि।

तद्गृहश्चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम्॥

(३३) विष्णु :—

अभक्षस्याऽविक्रय्यस्य[१०] च विक्रयी देवप्रतिमाभेदक-श्चोत्तमसाहसं दण्ड्यः।

(३४) अत्र प्रतिमोत्कर्षाऽपकर्षाभ्यां तद्भनोत्कर्षापकर्षाभ्यां वा दण्डविकल्पः।

(३५) शंख :—

आरामप्रतिमाकूप[११]संक्रमध्वजसेतुनिपानभङ्गेषु तत्समु[१२]त्थानं

---

१ ख । ग । च – विप्रत्वेन जीविकां। २ च अनुकुर्याच्च। ३ छ शतानि च। ४ छ – शाक इतिप्रसिद्धः। ५ च चिह्नोभूता। ६ क दैवतस्य। ७ ग विनाशमनुकरणं वा करोति स। ८ ग । च हरेच्छिन्द्यात्। ९ छ दहेद्वापि। १० च विक्रेयस्य। ११ क कूप। १२ छ – समुत्थानप्रति।

**प्रतिमासंस्कारोऽष्टशतं च ।**

निपानं कूपादि समीपे पशुजलपानस्थानम्[1] । (३६) अत्र एषां[2] सप्ताना मन्यतमभङ्गे कृते तत्कर्त्रा[3] आरामादेरभङ्गावस्थसमीकरणं[4] कार्यम् । पणानामष्टशती च तस्य दण्ड इत्यर्थः ।

(३७) **हन्यादित्यनुवृत्तौ विष्णुः—**

**सेतुभेदकृतः[5] ।**

इदं[6] महासेतु विषयम् ।

(३८) **शारीरोऽङ्गच्छेदोवेत्यनुवृत्तौ[7]**

**शंख :—**

**वापीतडागोदपानभेदमार्गरसद्रव्यदूषणे अदासीदास-सम्प्रदानकरणे च ।**

(३९) मार्गस्य तीक्ष्णशलाकादिना । रसद्रव्यस्य विषादिना । अदास्या दासाय दानेन च दूषणे दुष्टीकरणे तत्कर्तुः प्रमापणमङ्गच्छेदो वा कार्यः ।

(४०) **याज्ञवल्क्य :—**

**विषाग्निदां स्त्रियञ्चैव पुरुषघ्नीमगर्भिणीम् ।**
**सेतुभेदकरोञ्चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥**

विषदा अग्निदा पुरुषघ्नी सेतुभेत्त्री वा स्त्री अगर्भा चेत्तदा शिलां बद्ध्वाऽप्सु प्रवेशयेत्यर्थः[8] ।

(४१) **तथा—**

**विप्रदुष्टां पतिगुरुनिजाऽपत्यप्रमापिणीम् ।**
**विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥**

---

१ क - स्थलम् । २ छ तत एषां । ३ च कर्त्ता । ४ क - अभङ्गावस्था समीपकरणं । ५ क - भङ्ग ६ छ - इदं तु । ७ छ - शारीरोङ्गच्छेद इत्य । ८ छ - प्रवेशयेदित्यर्थः ।

विशेषतः प्रकर्षेण च दोषवर्तीम्। तथा पत्युः पित्रादेः अपत्यस्य वा मारणकर्त्रीं कर्णकरनासिकौष्ठछेदनपूर्वकं गोद्वारा मारयेत्।

(४२) तथा —

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥

क्षेत्रादीनां षण्णामन्यतमस्यापि दाहको भूपभार्यागामी वा वीरणाग्निना दाहयितव्यः।

(४३) मनु :—

प्राकारस्य च भेत्तारं[1] परिखानाञ्च पूरकम्[2]।
द्वाराणाञ्चैव भेत्तारं क्षिप्रमेव प्रमापयेत्॥

नगराद्याश्रयस्य[3] प्राचीरस्य परिखाया द्वारस्य वा विनाशकं त्वरया मारयेत्।

(४४) राजकोषोपहन्तॄंश्च[4] प्रतिकूलेष्ववस्थितान्[5]।
घातयेद्विविधैर्दण्डैररीणां चोपजापकान्॥

(४५) याज्ञवल्क्य :—

सुवर्णशतमेकन्तु वधार्हो दण्डमर्हति।
अङ्गच्छेदे तदर्द्धन्तु विनाशे[6] पञ्चविंशतिः॥

वधार्हे अपराधे प्रसक्तवधो ब्राह्मणः शतं सुवर्णान् दण्ड्यः। एवमग्रेऽपि।

(४६) तथा—

ये कार्यिभ्योऽर्थमेवं हि गृह्णीयुः पापचेतसः।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम्॥
विनियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्।

---

१ छ - छेत्तारं। २ क पूरणम्। ख = पूरकः। ३ छ - नगराद्याश्रयमत्स्यपरिखाया द्वारस्य नाशकं। ४ ग + ख = राज्ञः कोषोपहंतॄंश्च। ५ क = हन्तुरत्र। ६ छ - विवासे।

धनोष्मणा पच्यमानान्निःस्वांस्तान्कारयेन्नृपः ।

कार्यिभ्यो व्यवहारवद्भ्यः । कार्यिणां अर्थिप्रत्यर्थिनाम् ।

(४७) याज्ञवल्क्य :—

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्सम्मानयेद्राजा विपरीतांस्तु घातयेत् ॥
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।
सदानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ॥

(४८) तथा—

अवध्यं यश्च बध्नाति वध्यं यश्च विमुञ्चति ।
अप्राप्तव्यवहारञ्च स दाप्यो दममुत्तमम् ॥

योऽधिकृतः अवध्यं निरपराधत्वेन निर्णीतं बध्नाति, वध्यं सापराधत्वेन निर्णीतं त्यजति वा अपराधित्वेन निरपराधित्वेन वा अनिर्णीतं बध्नाति त्यजति वा स सहस्रं पणान्दण्ड्यः ।

(४९) मनु :—[2]

दण्ड्यमुन्मोचयेद्दण्डाद्द्विगुणं दण्डमावहेत् ।[3]
नियुक्तश्चाप्यदण्डानां दण्डकारी नराधमः ॥

दण्डाधिकारी दण्ड्यानुन्मोचयन् अदण्डयन् अदण्ड्यान् दण्डयन्[4] वा तद्दण्डद्विगुणं दण्ड्यः ।

(५०) कात्यायन :—

राजक्रीडासु ये शक्ता राजभृत्युपजीविनः ।
अप्रियस्य च वक्तारो वधं तेषां प्रकल्पयेत् ॥

---

१ छ तदा । छ कार्यिभ्यो व्यवहारिभ्यः कार्यिणामर्थिप्रत्यर्थिनाम् । २ ख । ग । छ - विष्णुः । ३ छ - दण्ड्यानुन्मोचयन्दण्डा । छ दण्ड्यानां । ४ छ - दण्डयित्वा तद्दण्डद्विगुणं ।

प्रतिरूपस्य कर्त्तारः प्रेक्षकाः प्रकराश्च ये ।
राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ॥

ये राजाज्ञां विना राजवेशकारिणः[1] । तथा स्वकर्त्तव्यराजकार्यविरोधेन नृत्यादिप्रेक्षकाः । तथा प्रकराः ये दण्डाख्यं राजकरं स्वभावतो निरतिशयं[2] मातिशयीकृत्य गृह्णन्ति[3] ते सर्वे नानारूपैर्वधप्रकारैर्वध्याः ।

(५१) वध्या इत्यनुवृत्तौ विष्णुः

ये चाऽकुलीना राज्यमभिकामयेयुः ।

अकुलीना राज्ञो यत्कुलं तदप्रसूताः ।

(५२) याज्ञवल्क्यः—

न्यूनं वाप्यधिकं वापि लिखतो राजशासनम् ।
पारदारिकचौरान्वा मुञ्चतो दण्ड उत्तमः ॥

राजशासनं इयद्देयमियद्ग्राह्यमित्यादिकम्[4] ।

(५३) शंखः—

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामान[5] व्यवहारे च शारीरोऽङ्गच्छेदो वा ।

शासनमाज्ञामकृतामपि कृतां कृत्वा प्रकाशयति[6] राजाज्ञां[7] वाऽतिक्रामति कूटया तुलया कूटेन मानेन प्रस्थादिना व्यवहरति तस्य मारणमङ्गच्छेदो वा । अपराधोत्कर्षापकर्षाभ्यामयं विकल्पः ।

(५४) अपराधस्यात्यपकर्षे कात्यायनः—

प्रमाणेन तु कूटेन मुद्रया वापि कूटया ।
कार्यन्तु साधयेद्योवै स दाप्यो[8] दण्डमुत्तमम् ॥

उत्तमं पणसहस्ररूपम् ।

---

१ ख+ग- राजवेशानुकारिणः । छ- ये वा राजाज्ञां विना राजवेशानुकारिणः । २ च- अनतिशयमतिशयं कृत्वा गृह्णन्ति वा ये राजधनं चोरयन्ति । ३ ग+छ- ये वा राजधनं चोरयन्ति । ४ च- इदंदेयमिदं ग्राह्यम् । ५ च- मानेन । ६ च- प्रकाशयति वा । ७ छ- राजाज्ञामति । ८ ग-।

(५५) **मनुः—**

**कूटशासनकर्तृंश्च प्रकृतीनाञ्च दूषकान् ।**

**बालस्त्रीब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा ॥**

शासनमिह राजादेशः । प्रकृतिरमात्य । दूषकान् अविद्यमानदोषत्वादिनः । द्विट्सेविनः राजविरोधिसेविनः । एतान्राजा हन्यात् ।

(५६) **विष्णुः—**

**स्वाम्यमात्यसुहृत्कोषदण्डराष्ट्रदुर्गाणि प्रकृतयः ।**

**तद्दूषकान् हन्यात् ।**

दण्डोऽत्र सेना । एतत्सप्ताङ्गकं राज्यम् । एषामङ्गानामन्यतमस्यापि दूषको वध्यः ।

(५७) **याज्ञवल्क्यः—**

**शस्त्रावघाते गर्भस्य पातने चोत्तमो दमः ।**

**उत्तमो वाधमो वापि पुरुषस्त्री प्रमापणे ॥**

परदेहे शस्त्रपातमात्रे । तथा ब्राह्मणेतरगर्भपातने पणसहस्रं दण्डः । उत्तमो वेति वध्योत्कर्षापकर्षाभ्यां विकल्पोऽत्र ।

(५८) **उशना—**

**परिक्लेशेन पूर्वःस्याद्भैषज्येन तु मध्यमः ।**

**प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः ॥**

परिक्लेशेन परिश्रमजननेन, भेषजप्रयोगेण प्रहारेण वा गर्भपातने प्रथम-मध्यमोत्तमसाहसानि यथाक्रमं दण्डाः ।

---

१ क = विटसेविनः । २ ग, च, छ संवकान् । ३ च हन्यादित्यर्थः । ४ छ = एषामङ्गानामेकतमस्यापि । ५ च, छ परद्रोहे शस्त्रपातनमात्रे । ६ छ = उत्तमो अधमोवेति । ७ च वधगतोत्कर्षा । छ – मध्यगतोत्कर्षा । ८ छ भेषजेन तु । ९ च = भेषजप्रयोगेन । भेषजेन भेषजप्रयोगेण प्रहारेण गर्भपातने प्रथममध्यमोत्तमसाहसानि यथाक्रमं दण्डः ।

(५९) बृहस्पतिः—

साहसं पञ्चधा प्रोक्तं वधस्तत्राधिकः स्मृतः ।

तत्कारिणो नार्थदमैः शास्या वध्याः प्रयत्नतः ॥

तत्कारिणो वधकारिणः ।

(६०) वधेपि विशेषमाह स एव—

प्रकाशवधका ये तु तथा चोपांशुघातकाः ।

राज्ञा सम्यग्वधं हित्वा हन्तव्या विविधैर्वधैः ॥

सम्यग्वधः सकृदेव[1] शिरश्छेदः । विविधो वधोऽङ्गशास्तिपूर्विका[2] प्राणशास्तिः ।

(६१) कात्यायनोपि—

व्यापादने तु तत्कारी वधञ्चित्रमवाप्नुयात् ।

(६२) तथा—

मित्रप्राप्त्यर्थलोभैर्वा राज्ञा लोकहितैषिणा ।

न मोक्तव्याः साहसिकाः सर्वभूतभयावहाः ॥

लोभाद्भयाद्वा यो राजा न हन्यात्पापकारिणः ।

तस्य प्रक्षुभ्यते[3] राष्ट्रं राज्याच्च परिहीयते ॥

वन्ध्याग्निविषशस्त्रेण परान्यस्तु प्रमापयेत् ।

क्रोधादिना निमित्तेन नरः साहसिकस्तु सः ॥

(६३) बौधायनः—

क्षत्रियादीनां[4] ब्राह्मणवधे वधः । सर्वस्वहरणञ्च । ... मेव तुल्यापकृष्टवधे यथाबलरूपं[5] च दण्डं कल्पयेत्[6] । क्षत्रियवधे गोसहस्रं वृषाधिकं राज्ञ उत्सृजेत् । वैरिनिर्यातनार्थं शतं वैश्ये, दश शूद्रे वृषभश्चाधिकः ।

---

१ ख—सकृच्छिरश्छेदः । २ क—अङ्गशान्तिपूर्विकाप्राणशान्तिः । ३ छ—प्रभ्रश्यते । ४ ग—क्षत्रियाणां । ५ ख । ग—यथाबलमनुरूपं । च—यथावलमर्थं । ६ छ—प्रकल्पयेत् ।

शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातोऽन्यत्राऽऽत्रेय्याः।
धेन्वनडुहोरन्ते[1] चान्द्रायणञ्चरेदात्रेय्या वधः क्षत्रिय-
वधेन व्याख्यातोऽतो हंसभासबर्हिणचक्रवाकबलाका-
काकोलूकमण्डूकनकुलभेरीकबभ्रुनकुलादीनां वधः
शूद्रवत्।

(६४) क्षत्रियादीनां त्रयाणामपि ब्राह्मणवधे सर्वस्वहरणं वधश्च। तेषामेव क्षत्रियादीनामेव। तुल्यः सजातीयः। अपकृष्टो हीनजातीयः। यथाबलं यथाशक्ति। अनुरूपं[2] धनरूपं उत्तमसाहसादिकं चकारात् शारीरं दण्डं च कल्पयेत्। क्षत्रियेति। ब्राह्मणस्य[3] तु क्षत्रियवधे सवृषं गोसहस्रम्। वैश्यवधे[4] सवृषं गोशतम्। शूद्रवधे सवृषं गोदशकम्। शूद्रवधेनेति रजस्वलान्यस्त्रीवधेषु[5] धेन्वनडुहान्यगोवधे शूद्रवधवद्दण्डः। आत्रेयी रजस्वला तस्यास्तु वधे क्षत्रियवधवद्दण्डः। भेरीकः छुच्छुन्दरीति प्रसिद्धः। बभ्रुः स्थलनकुलः। नकुलो जलनकुलः। आदिपदेनावध्या-[6] स्तिर्यञ्चः।

(६५) बृहस्पति :—

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः।
मर्मप्रहारदो[7] यस्तु घातकः स उदाहृतः॥
मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम्।
आरम्भकृत्सहायाश्च दोषभाजस्तदर्द्धतः॥
क्षतस्याल्पमहत्त्वञ्च मर्मस्थानञ्च यत्नतः।
सामर्थ्यञ्चानुबन्धञ्च ज्ञात्वा चिह्नैः प्रसाधयेत्[8]॥

(६६) यो घातदण्ड[9] उक्तः स इह मर्मघातिन एव आरम्भकृतः सहकारिणश्च प्रत्येकं तदर्द्धरूपः। मर्मघातित्वनिश्चयार्थं क्षतस्येत्यादि। (६७) तथा

---

१ ख = धेनोरनडुहोर्हन्ता। छ = धेन्वनडुहोर्वान्ते। २ ख = अर्थरूपं। ३ क = ब्राह्मणस्य तु। ४ छ = ब्राह्मणस्य वैश्यवधे। ५ छ वधे। ६ छ = आदिपदेनापरास्तिर्यञ्चः। ७ छ = यश्च। ८ छ = प्रकाशयेत्। ९ ख + छ = घातक।

च क्षतस्य[1] महत्त्वेन मर्मस्थानस्थत्वेन[2] वा अभिभावकरूपत्वादिरूपेण अनुबन्धेन पौनः पुन्येन मर्मघातकत्वमवसेयमित्यर्थः ।

(६८) नारद :—

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोर्हति ॥
शिरसो मुण्डनन्तस्य[3] दण्डो निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥

(६९) साहसचौर्ययोर्यम :—

न शारीरो ब्राह्मणस्य[4] दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बध्वा राजा भक्तं प्रदापये[त्] ॥
अथवा बन्धनं रज्वा कर्म वा कारयेन्नृपः ।
मासार्द्धमासं कुर्वीत कार्यं विज्ञाय तत्त्वतः ॥
यथाऽपराधं विप्रन्तु विकर्म्माण्यपि कारयेत् ।

(७०) याज्ञवल्क्य :—

यः साहसं कारयति स दाप्यो द्विगुणन्दम[म्] ।
यश्चैव[ं] कृत्वाऽहं दाता कारयेत्स चतुर्गुणम् ॥

(७१) यश्चैवमिति । एतदभियोगेन यल्लगिष्यति तदहं दाता त्वं तावत्कुर्वित्युक्त्वा यः कारयति तस्य चतुर्गुणो दमः ।

(७२) कात्यायन :—

आरम्भकृत्सहायश्च तथा मार्गा[नु]देशकः ।
आश्रयः शस्त्रदाता च भक्तदाता [विक]र्मिणाम् ॥
युद्धोपदेशकश्चैव[5] तथा नाशप्रवर्त्तकः ।

---

१ छ – क्षतस्य अल्पत्वेन वा सामर्थ्येनातिचारकत्वादिरूपेण अनुबन्धेनापौनः । २ ख + च = मर्मस्थानस्थत्वेन सामर्थ्येन वा । ग – मर्मस्थलघुत्वेन वा सामर्थ्येन । ३ छ = मुण्डनं दण्डस्तस्य । ४ छ – ब्राह्मणे वै । ५ च – युक्तयोपदेशकश्चैव ।

उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपन्तु[1] दण्डमेषां[2] प्रकल्पयेत् ॥

(७३) आरम्भेत्यादि । अपरमक्रियाचिकीर्षुं ज्ञात्वा यस्तदुद्यमं तत्साहाय्यं वा करोति तस्य तत्कर्मानुकूलोपदेशम्वा[3] करोति । अपकर्मणि[4] आश्रयभूतो वा तदनुकूलशस्त्रदाता वा भोजनदाता वा कृतापकर्मणस्त्राणाय तस्मै युद्धोपदेशम्वा करोति । [5]अकर्मकारिणि विषाद्यर्पणेन तं परनाशाय प्रवर्त्तयति साहसिकादिना[6] जने पीड्यमाने स्वयमक्षमोपि वा यः परद्वारापि[7] न प्रतिकरोति । अयुक्तो राज्ञाऽनियुक्तः सन् नियुक्तवत् पीडयति । दोषवक्ता पीडनीयस्य दोषवक्ता अनुमोदकः पीडकस्याऽनुमन्ता । क्षमः सन् पीडकस्याप्रतिषेद्धा एते त्रयोदशापि तदपराधकर्त्तार इव स्वशक्त्यनुरूपं दण्ड्याः ।

(७४) नारद :—

अयुक्तं साहसं कृत्वा प्रत्यासत्तिं करोति यः ।
ब्रूयात्स्वयं वा सदसि तस्यार्द्धविनयः स्मृतः ॥

प्रत्यासत्तिं विनेतुः सहचरतां ब्रूयादिति स्वकृतमपराधं स्वयमेव प्रकाशयति ।

(७५) तथा—

गूहमानस्तु दौःशील्यं यदि वाऽतः स जीवति ।
सभ्याश्चास्य[8] न तुष्यन्ति तीव्रो दण्डस्तु पात्यते[9] ॥

(७६) स्वयं कृतमपकर्म विनेत्रादिना पृष्टः सन्नपह्नुवानो[10] यद्यपकर्मणैव जीविकां करोति तदा लघुन्यपकर्मणि तीव्रो[11] दण्डस्तस्य कार्य इत्यर्थः[12] ।

---

१ क = रूपस्तु । २ क = दण्डमेव । ३ ग तत्कर्मानुकूल धर्मोपदेशं वा । छ = तत्कर्मानुकूल कर्मोपदेशं वा करोति । ४ ख = अपकर्मण । ग + च + छ = अपकर्मिण । ५ ख = अपकर्मकारिविषाद्यर्पणे । छ = अपकारिणि । ६ छ = साहसादिना । ७ छ = परद्वारा न । ८ छ = सभ्याश्चान्ये न । ९ छ पद्यते । १० छ = अपह्नुवानोसौद्यपकर्मणैव । ११ छ = तीव्रतरो । १२ च = एवञ्च सापराधः शास्त्रोक्तं दण्डं यदि पणं करोति तदा पणमपि स्वकृतं दाप्य इत्यधिकः पाठः ।

## अथ घातकान्वेषणम् ।

(७७) तत्र याज्ञवल्क्यः[1]—

अविज्ञातहतस्याऽऽशु कलहं सुतबान्धवाः ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥
स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह ।
तत्प्रदेशसमासन्नं पृच्छेद्वापि जनं शनैः ॥

तत्प्रदेशसमासन्नं[2] हननदेशसमीपस्थम् ।

(७८) बृहस्पतिः—

हतः सन्दृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रतिवेश्यानुवेश्यौ[3] च तस्य मित्राणि[4] बान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नहोढेन[5] वा नरैः[6] ।
एषोदिता घातकानां तस्कराणां च भावना ॥
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथेन विशोद्धव्यः[7] सर्ववादेष्वयं विधिः

तत्कार्यं हननरूपं । न प्रपद्यते पृष्टः सन्नानुमन्यते ।

(७९) व्यासः[8]—

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम् ।
[illegible]न्या[illegible]श्चित्रैर्वधोपायैरुद्वेगजनकैर्नृपः ॥

---

१ क - तत्र व्यासः । २ छ - हननप्रदेश । ३ क - प्रातिवेश्या । ४ च - तन्मित्राणि । ५ च + संसर्गाच्चिह्नहोढेन । ६ च + छ = नरः । ७ च + विशोद्धव्याः । ८ च + छ - तत्र व्यासः ।

(८०) बृहस्पतिः—

दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।

निग्रहानुग्रहाद्राज्ञः कीर्त्तिर्धर्मश्च वर्द्धते ॥

(८१) निग्रहेति । असाधोर्निग्रहात् साधोश्चानुग्रहाद्राज्ञः कीर्त्तिधर्मयोरुपचयो भवतीत्यर्थः ।

## अथ स्त्रीसंग्रहणम् ॥ १५ ॥

(१) तत्र व्यासः—

संग्रहस्त्रिविधः प्रोक्तः प्रथमो मध्य उत्तमः ।

उत्तश्चेति स शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

अदेशकाले सम्भाषा अरण्ये च परस्त्रियाः ।

अपाङ्गप्रेक्षणं हास्यं पूर्वं संग्रहणं स्मृतम् ॥

(२) याज्ञवल्क्यः—

अपाङ्गप्रेक्षणं हास्यं दूतीसम्प्रेषणं तथा ।

स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥

(३) नारदः—

परस्त्रिया सहाऽकाले अदेशे पुरुषस्य तु ।

स्थानसम्भाषणामोदास्त्रयः संग्रहणक्रमाः ।

नदीनां सङ्गमे तीर्थे आरामेषु वनेषु च ।

स्त्रीपुंसौ यत्समेयातां तच्च संग्रहणं स्मृतम् ॥

दूतीसम्प्रेषणैर्वापि लेखसम्प्रेषणैरपि ।

---

१ च = दूतीसंप्रेषणं तथा । २ ग + छ = बृहस्पतिः । ३ छ समीयातां । ४ क = मतम् ।

अन्यैश्चापि व्यभिचारैराद्यं संग्रहणं मतम् ॥

(४) संग्रहणमिति सम्यग्गृह्यते तदनुरक्ततया प्रतीयते आशयो येन तत्संग्रहणम् । अनन्यथासिद्धं परस्त्रीसंलापादि । तेन हि कर्मणा वचसा च परस्परमनुरक्तावनुमीयेते । (५) अनन्यथासिद्धत्वबलादेवाज्ञाततया ऋजुतया कार्यौत्कस्त्यादिना अन्याभिसन्धिना वा कृतः संलापादिर्न संग्रहणम् ।

(६) एतत्परमेव मनुवचनमपि—

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं गृहे स्त्रीभिः कुर्य्युरप्रतिवारिताः ॥ इति ।

(७) अदेशेत्यादि । अदेशे निर्ज्जनादौ । अकाले रात्र्यादौ । स्थानमवस्थितिः । आमोदः परिहासः । (८) तथाच येन व्यापारेणात्यासंगकृतेन चित्तं स्खलितमनुमीयते तदाद्यं संग्रहणमिति वक्तुलार्थः ।

(९) मध्यमे बृहस्पतिः—
प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं संग्रहं विदुः ॥

(१०) व्यासः—
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं चान्नपानैर्मध्यमः संग्रहःस्मृतः ॥

सम्भाषणमिह पूर्वापेक्षया अतिशयितमभिमतं गन्धेत्यादि अस्य द्रव्यव्ययरूपतया पूर्वापेक्षयाऽधिकत्वमिति भावः ।

---

१ ग=अन्यैर्वा व्यभिचारैर्वा आद्यं संग्रहणं स्मृतम् । छ=अन्यैर्वापि व्यभीचारैराद्यं संग्रहणं स्मृतम् । २ ङ+च=प्रमीयते । ३ क=अन्यथा । ४ छ सिद्ध । ५ च+छ= तेन हि । ६ छ=अन्यथाभि । ७ च=श्चापि । ८ छ=अत्यासंगं गतेन । ९ च=भाषणं चैव रहसि । १० छ=सम्भाषणमिति पूर्वापेक्षयातिशयमभिमतम् ।

(११) उत्तमे बृहस्पतिः—

एकशय्यासनं क्रीडा चुम्बनालिङ्गनन्तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

(१२) व्यासः—

शय्यासने विविक्ते तु परस्परमपाश्रयः ।
केशाकेशिग्रहश्चैव ज्ञेय उत्तमसंग्रहः ॥
उपकारक्रिया केलिः स्पर्शो भूषणवाससाम् ।
सहशय्यासनञ्चैव सर्वं संग्रहणं स्मृतम् ॥
स्त्रियं स्पृशत्यदेशे[1] यः स्पृष्टो वा मर्षयेत्तया[2] ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥

उपकारक्रिया हिताचरणक्रिया । उपचारेति क्वचित्पाठः । तत्र ताम्बूलादि-प्रेषणमर्थः । केलिर्न्नर्म । संग्रहणं उत्तममितिशेषः । अदेशे[3] स्तनादौ ।

(१३) नारदः—

दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत् ।
पूर्वं ममेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥
पाणौ यश्चापि गृह्णीयात् वेश्यां वस्त्राञ्चलेपि वा ।
तिष्ठतिष्ठेति वा ब्रूयात्सर्वं संग्रहणं स्मृतम् ॥

वेश्यामित्युपलक्षणम् । स्वदारव्यतिरिक्तायां स्त्रियामीदृशः सचेष्टस्य[4] व्यवहारः संग्रहणमित्यर्थः ।

(१४) कात्यायनः[5]—

भूतोपचारयुक्तश्चेद[6]वेलास्थानसङ्गतः ।

---

१ छ–स्पृष्टा चामर्षयेत्तया । २ क=तदा । ३ घ पादौ अदेशे स्तनादौ । ४ घ= ईदृशचेष्टस्य । ५ छ -भूतोपचारेत्यारभ्य संग्रहो नवधा स्मृत इत्यन्तः पाठो नास्ति । ६ घ=युक्तश्च मवेमास्थानसंगतः ।

कण्ठकेशाम्बरग्राहो कर्णनासाकरादिषु ॥
एकस्थानासनाहारः संग्रहो नवधा स्मृतः ।

(१५) बृहस्पति :—
त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्याद्धिको द्रविणाधिके ॥

(१६) एषु त्रिषु संग्रहेषु यथाक्रमं प्रथममध्यमोत्तमसाहसा दण्डाः । अधिक धनस्य त्वधिकदण्ड इत्यर्थः ।

(१७) मनु :—
परपत्न्या तु पुरुषः सम्भाषां योजयन् रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

(१८) यया सह पूर्वं यस्याऽभिलापोऽभूत्तया सह रहस्यपि औचितीवादादधिकमालापमात्रं कुर्वाणः प्रथमसाहसं दण्ड्य इत्यर्थः ।

(१९) तथा—
यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रमः ॥

(२०) अनाक्षारितस्य निमित्तवशादौचितीवादादधिकेप्यालापे न दोष इत्यर्थः ।

(२१) अनाक्षारितस्यापि निर्जने परस्त्रिया सह संलापे दोष एवेत्याह स एव—
परस्त्रियं योभिवदेत्तीर्थेऽरण्ये गृहेपि वा ।

१ घ - न ग्राह्योह्यन्यथाकारी ग्राहको दण्डमर्हतीत्यर्द्धस्य एतैरेव चिह्नैर्भ्रांतान्तरप्रयुक्तैर्न स ग्राहक निश्चेतव्यः । यस्तु तेनैव तथात्वनिश्चयं कुरुते स एव दण्ड्य इति रत्नाकर इत्यधिकः पाठः । २ छ - तत्र बृहस्पतिः । ३ च - धनस्याधिकोपि । छ - अधिकधनस्य त्वधिकोपि । ४ ग + ङ - यस्याभिशापोभूत्तया । च - यस्याभिशापोवृत्तः तया सहारहस्यपि । ५ च + छ - पूर्वं । ६ छ - संलापो ।

नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात् ॥

(२२) मनु :—

न सम्भाषां सह स्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णन्दण्डमर्हति ॥

निषिद्धस्तस्याः पत्यादिना निवारितः ।

(२३) याज्ञवल्क्य :—

स्त्री निषेधे शतं दण्ड्या द्विशतन्तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

(२४) स्त्र्येव चेन्निवारितापि पुरुषेण सममालपति तदा शतं पणान् दण्ड्या । पुरुष-एव चेन्निवारितः परस्त्रिया सहालपति तदा द्विशतं पणान् दण्ड्य । उभावपि-निवारितौ चेत् परस्परमालपतस्तदा तौ प्रत्येकं प्रथमसाहसं दण्ड्यावित्यर्थः ।

(२५) मनुः—

किञ्चिदेव हि दाप्यः स्यात् सम्भाषां ताभिराचरन् ।
प्रेष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥

(२६) एकपुरुषाश्रितया स्वप्रेष्यया तापस्या वा रहसि सहालपन् किञ्चिदेव सुवर्ण-न्यूनं दमं दाप्य इत्यर्थः ।

(२७) शंखः—

येन येनाङ्गेनापराधं कुर्यात्तत्तस्य च्छेत्तव्यमष्टसहस्रं वा
दण्डोऽन्यत्र ब्राह्मणाददण्ड्यो हि ब्राह्मणः ।

शारीरदण्डानर्हो ब्राह्मणः ।

१ च – नदीनामपि। २ च : छ परस्त्रीभिः । ३ च समाप्नुयात । ४ छ दण्ड्यो । ५ छ – स्त्री चेन्निवारिता । ६ छ निवारितःस्त्रिया । ७ च द्विशतं । ८ क प्राप्यः । ९ च – लपने । छ सुवर्णतो । १० छ विष्णुः । ११ च अदण्ड्या हि । १२ च ब्राह्मणाः । १३ छ – ब्राह्मण इत्यर्थः ।

(२८) मनुः—

परदाराभिमर्षे तु प्रवृत्तांस्त्रीन् महीपतिः ।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥

त्रीन् ब्राह्मणेतरान् । उद्वेजनकरैः कर्णनासाच्छेदनरूपैः[1] ।

(२९) प्रतिलोमसंग्रहे तु स एव—

अब्राह्मणः संग्रहणे प्राणान्तन्दण्डमर्हति ।

(३०) मात्स्ये—

यस्तु सञ्चारकस्तत्र पुरुषः स तथा भवेत् ।
पारदारिकवद्दण्डो यश्च स्यादवकाशदः ॥

सञ्चारकः अभिसारयिता अवकाशदः अभिसारस्थानदाता ।

(३१) अनियतकानान्तु[2] संग्रहणे दण्डो नायमित्याह मनुः—

नैष चारणदारेषु विधिर्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति[3] हि ॥

चारणो नटः । भार्यापुत्रः स्विकातनु[4]रित्यादिस्मरणादात्मा[5] भार्या ते-नात्मानं भार्यां जीवनार्थमुपजीवतीत्यात्मोपजीवी शैलूषादिः । एतो हि स्वस्त्रियमप्यलंकृत्य[6] व्यभिचारयत इत्यतो[7] नैतत्संग्रहे दण्डः ।

(३२) अभिगमदण्डस्त्वत्रापि स तु वन्धक्यभिगमप्रकरणे वक्ष्यते ।

(३३) नारदः—

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह ।
दुष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे ॥

१ छ – कर्णनासिकादिछेदरूपैः । २ घ – अनियतभर्तृकाणान्तु । च – अनियतवर्णभर्तृ-काणान्तु । छ – अनियतभर्तृकायान्तु । ३ छ – चारयन्ति च । ४ च – स्वकीयात्मेत्यादि । ५ छ – स्मरणादिह आत्मा । ६ छ – स्वां स्त्रियं । ७ च – व्यभिचारयतोऽतो नैतत्संग्रहे ।

(३४) नाथवत्यास्तावत्संग्रहणं दुष्टं दण्डताचीर्णं यदि तु सैव संगृहीतुर्गृहं स्वेच्छया समागत्य संग्राहयति तदा तदपि न दुष्टमित्यर्थः ।

(३५) विष्णुः—

अदुष्टत्यक्तदारस्य[१] क्लीबस्याप्यक्षमस्य वा ।
स्वेच्छानुपेयुषो दारान्न दोषः साहसे भवेत् ॥

पतित्यक्तां[२] क्लीवपतिकां वा अक्षमपतिकां वा परदारान् स्वेच्छान् तद्गृहेपि संगृह्णतोऽभिगच्छतो वा न दण्ड्य इत्यर्थः ।

## अथाभिगमदण्डः ।

(३६) तत्र मनुः—

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥

अनिच्छन्तीं[३] कन्यामभिगच्छन् तत्सवर्णो वध्यो नत्विच्छन्तीमपीत्यर्थः ।

(३७) उत्तमां भजमानस्तु जघन्यो वधमर्हति ॥
शुल्कं दद्यात्सेवमानः सम इच्छेत्पिता यदि ॥

(३८) उत्कृष्टवर्णां कन्याम[४]निच्छन्तीं वाऽधमवर्णोऽभिगच्छन् वध्यः । तस्यास्तत्पितुश्चेच्छया[५] तामभिगच्छंस्तत्सवर्णः शुल्कं तत्पित्रे दाप्यः । किन्तु सा दत्तशुल्का तेनैव विवाह्येत्यर्थः[६] ।

---

१ च - क्लीबस्य वाक्षमस्य च । २ च पतित्यक्तान्वा । छ परित्यक्तान् क्लीबपतिकानक्षमपतिकान्वा परदारान् स्वेच्छांस्तद्गृहेपि । ३च इच्छन्तं । ४ च कन्यामिच्छन्तीमनिच्छन्तीम्वा । ५ च - पितुश्चेच्छया गच्छन् तत्सवर्णः । ६ छ - विवाह्येति ।

(३९) तदाह नारदः—

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः।

किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

(४०) शंखः—

समां शुल्कमाभरणं द्विगुणञ्च स्त्रीधनं दत्वा प्रतिपद्येत।

समां कन्यां स्वयं विमतां शुल्काभरणस्त्रीधनानि द्विगुणानि दत्वा रन्ता विवाहयेदित्यर्थः।

(४१) अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः।

तस्याशु कर्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट्शतम् ॥

सवर्णामनिच्छन्तीं कन्यां योनावङ्गुलिप्रक्षेपेण यो मैथुनवतीं कुर्यात् तस्याङ्गुलिद्वयच्छेदः। पणषट्शतं दण्डश्चेत्यर्थः।

(४२) सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात्।

द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥

सकामामिच्छन्तीं दूषयन् योनावङ्गुलिप्रक्षेपेण रमयन् तुल्यः सवर्णः।

(४३) नारदः—

कन्यां भजन्तीमुत्कृष्टां न किञ्चिदपि दापयेत्।

जघन्यां सेवमानां तु संयतां वासयेद्गृहे।

कन्यैव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः।

शुल्कञ्च त्रिगुणन्दद्याच्छिफाश्चैवाप्नुयाद्दश ॥

कुर्यात्तद्योनावङ्गुलिप्रक्षेपेण दूषयेत्। शिफा प्रहारान्।

१ च नाप्यतिक्रमः। २ छ द्विगुणं स्त्रीधनञ्च। ३ ग रमितां। च स्वयं वासितां। छ स्वयं रमितां। ४ छ। च सवर्णा विवाहयेदित्यर्थः। ५ क अभिगम्य तु यः। च अभिगत्य तु। ६ छ कर्तव्यङ्गुल्यौ। ७ ख अभिषट्शतत्रयं। ८ च + छ उत्कृष्टं। ९ च + छ जघन्यं। १० च। छ द्विगुणं। ११ छ शिफा जटारज्ज्वादि।

(४४) या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति ।
अङ्गुल्योरेव च च्छेदं खरेणोद्वहनं तथा ॥

या पुनः स्त्री कन्यां तत्योनावङ्गुलिप्रक्षेपेण दूषयेत् सा तत्क्षणादेव शिरो-मुण्डनं तदभ्यामे अङ्गुल्योच्छेदनं गर्दभेन च राजमार्गगमनमर्हतीत्यर्थः ।

(४५) याज्ञवल्क्यः—
अलङ्कृतां हरन्कन्यां उत्तमं ह्यन्यथाधमम् ।
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥
सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।
दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥

अलङ्कृतां अन्यस्मै दातुं प्रसाधितवतीमुत्तमं साहसम् । अन्यथाऽन-लङ्कृता चेत् तदाऽधमं प्रथमसाहसं प्रातिलोम्ये उत्तमायां वधो हीनवर्णस्य अन्यथेति तस्या अकामत्वे ।

(४६) तथाह—
भर्त्तारं लंघयेद्यातु स्त्री ज्ञातिधनदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥

धनभ्रात्रादिसौन्दर्यादिदर्पेण या पतिमवमन्य व्यभिचरेत् तां राजा लोक-मध्ये कुक्कुरैः खादयेदित्यर्थः ।

(४७) पुमांसं दाहयेत्पापं शयने तप्त आयसे ।
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥

१ घ दण्ड । २ छ अङ्गुल्यो रचयेच्छेदं । ३ च शिरसो । ४ छ अङ्गुल्योश्छेदं गर्दभेन । ५ च—सकामामनुलोमाश्च । ६ च न दण्डस्त्वन्यथा । ७ छ करच्छेदस्तूत्तमायां । ८ ग प्रसाधिताम् । छ प्रतिश्रुताम् । च उत्तमं उत्तमसाहसम् । ९ छ अलङ्कृता न चेत् । १० च उत्तमाद्य वधो हीनवर्णस्य । ११ छ तथा । १२ ख । छ - बल । १३ छ भ्रातृ । १४ च दाहयेत्तं च ।

(४८) तथानन्तरोक्ताया जारं दर्पणाभिगन्तारं लोहमये तप्ते शयने शाययित्वा जीवन्तमेव दाहयेत् । मारणाधिकृताश्च पुरुषास्तद्दाहक्षमाणि काष्ठानि निक्षिपेयुरित्यर्थः ।

(४९) **मनुः—**

**अगुप्तां क्षत्रियां वैश्यां शूद्रां वा ब्राह्मणो व्रजन् ।**

**शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजास्त्रियम् ॥**

अन्त्यजो रजकचर्मकारादिः ।

(५०) **सम्वत्सराऽभिशस्तस्य दुष्टस्य द्विगुणो दमः**

**व्रात्यया सह सम्वासे चाण्डाल्या तावदेव तु ॥**

आदौ परस्त्रीगमनदोषेण दुष्टस्य सम्वत्सरोपरि पुनस्तस्याभिशस्तस्य प्रथमदमाद्द्विगुणो दमः । (५१) व्रात्ययेत्यादि । व्रात्या व्रात्यजाता । व्रात्यश्च भ्रष्टाचारः । **अवसन्नकर्मधर्माचारो व्रात्यः इति हारीतवचनात् । व्रात्या अतिक्रान्तविवाहसमया कन्येति हलायुधः ।** (५२) व्रात्यागमने चाण्डालीगमने च दमः सहस्रपणरूपः । स एव पुनर्गमने च द्विगुणः कार्यः तेन सर्वत्रैव सजातीयव्यभिचारस्याभ्यासे द्वितीये प्रथमदण्डद्वैगुण्यमित्यर्थः ।

(५३) **याज्ञवल्क्यः—**

**अन्त्याभिगमने त्वङ्कयित्वा कबन्धेनैव प्रवासयेत् ।**

**शूद्रस्तथाङ्क्य एव स्यादन्त्यस्यार्यागमे वधः ॥**

१ च – तच्चानन्तरोक्ताया । छ – तस्यां चानन्तरोक्तायां जारं बलदर्पणाभि । २ छ – पुरुषास्तत्र तद्दाह । ३ छ – सहस्रमन्त्यज । ४ छ – चाण्डाल्या वा स एव तु । ५ ख + ग + च – ततः । ६ ग + च + छ – तस्यामेवाभि । ७ ग – छ धर्माचारः । च – व्रात्यश्च दुष्टधर्माचारः । ८ च – विवाहकालकन्येति । छ – अतिक्रान्तविवाहकाला कन्याइति । ९ छ – दण्डः । १० छ – सजातीयव्यभिचारे सत्यभ्यासे । ११ ख – कबन्धेनै ।

(५४) अङ्कबन्धोऽशिरस्कपुरुषोऽङ्कस्तेनाङ्कयित्वा त्रैवर्णिकं निर्वासयेत्। शूद्रोऽङ्कय एवेत्येवकारेण निर्वासनमात्रनिषेधः। (५५) तेनान्त्यागमने वधोक्त्या न विरोधः। अन्त्यस्य चाण्डालस्य आर्यागमे त्रैवर्ण्यस्त्रीगमने वधः।

(५६) **शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमाविशन्।**
**अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते॥**

(५७) शूद्रस्यागुप्तत्रैवर्णिकस्त्रीगमने एकाङ्गच्छेदः सर्वस्वहरणञ्च। एकमङ्गञ्चात्र शिश्नरूपम्। **आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं गुप्ताञ्चेद्वधोऽधिक इति गोतमवचनात्।** गुप्तद्गमने तु वधसहितं पूर्वोक्तं सर्वमित्यर्थः।

(५८) **वैश्यः सहस्रं दण्ड्यः स्यात्सम्वत्सरनिरोधतः।**
**सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति॥**
वैश्यस्य गुप्तब्राह्मणीगमने सम्वत्सरबन्धनादनन्तरं पणसहस्रं दण्डः। क्षत्रियस्य तद्गमने स एव दण्डः। खरमूत्रेण शिरोमुण्डनम्।

(५९) **ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ।**
**वैश्यं पञ्चशतं कुर्यात्क्षत्रियन्तु सहस्रिणम्॥**
सुगमं। (६०) वैश्यस्यायं दण्डह्रासः शूद्रातुल्यायां ब्राह्मण्या गमने अन्यायास्तु गमने क्षत्रियवदेव दण्डः।

(६१) **उभावपि च तावेव ब्राह्मण्या गुप्तया सह।**
**विप्लुतौ शूद्रवद्दण्ड्यौ प्रदग्धव्यौ कटाग्निना॥**

---

१ ख+ग अङ्ककबन्धो। च - बन्धेन तु प्रवासयेत्। २ ख - पुरुषाकारोऽङ्कः। ३ छ - प्रवासयेत्। ४ छ - तेनान्त्याभिगमने त्रैवर्णिकस्त्रीगमने वधः। ५ च - वधोक्तेरविरोधः। ६ च+छ त्रैवर्णिकस्त्री। ७ च द्विजातिस्त्रियमाविशन्। ८ च - अगुप्तामङ्ग। ९ च - गुप्ता। १० च - एकाङ्गञ्चात्र। ११ छ - गुप्ताञ्चेत्। १२ छ - गुप्ततदभिगमने तु। १३ च - एतद्गमने। १४ छ मूत्रेण च। १५ च+छ - अन्यस्यास्तु गमने। १६ च - वद्दण्डः। १७ छ - दग्धव्यौ तु। च - दग्धव्यौ वा।

तौ क्षत्रियवैश्यौ ब्राह्मण्या गुणवत्या। अतो **वैश्यः सहस्रं दण्ड्यः स्या**दित्यादिना न विरोधः शूद्रवदिति सर्वस्वदण्डलिङ्गच्छेदवध-बन्धौ[1] कार्यावित्यर्थः। (६२) कटेति[2] दाहपक्षे तु **वैश्यो लोहितदर्भैः क्षत्रियः शरपत्रैरावेष्ट्य इति वसिष्ठवचनात्** तत्तत्तृणवेष्टितौ तौ दाह्यावित्यर्थः।

(६३) **सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।**
**शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः॥**
**मौण्ड्यं प्राणान्तिको[3] ह्यत्र ब्राह्मणस्य विधीयते।**
**इतरेषान्तु वर्णानां दण्डः[4] प्राणान्तिको भवेत्॥**

प्राणान्तिको दण्डो ब्राह्मणस्य मुण्डनमेव इतरेषान्तु वध एव।

(६४) **न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्।**
**राष्ट्रादेव[5] बहिः कुर्यात्समग्रधनमक्षतम्॥**

इदन्तु निर्वासनमसकृत्तादृशापराधकरणे।

(६५) **न ब्राह्मणवधाद्भूयानधर्म्मो विद्यते भुवि।**
**तस्मादस्य वधं राजा मनसापि न चिन्तयेत्॥**

स्पष्टम्।

(६६) **वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्।**
**यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः॥**

तौ दण्डौ[6] पञ्चशतसहस्रपणरूपौ। (६७) अयञ्च दण्डह्रासो गुणवद्वैश्यस्य निर्गुणक्षत्रियागमने। अन्यथा द्वावपि सहस्रं दण्ड्यौ।

१ च = बन्तौ। छ - बधबन्तौ च। २ च - कटाग्निना। छ - कटेन। ३ ग = दण्ड्यो। च + छ = दण्डो। ४ च = दमो। ५ छ — राष्ट्रादेनं। ६ छ — दण्डः पञ्चशतसहस्रपणरूपः।

(६८) सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो[1] वै भवेद्दमः ॥

ते क्षत्रियावैश्ये । शूद्रायां गुप्तायाम् ।

(६९) क्षत्रियायामगुप्तायां[2] वैश्ये पञ्चशतो[3] दमः ।
मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव[4] वा ॥

क्षत्रियस्तु गुप्तक्षत्रियागामी खरमूत्रेण स्तिमितकेशो मुण्डनीयः पणपञ्च-शतं[5] वा दण्डनीयः ।

(७०) अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात् सहस्रं त्वन्त्यजस्त्रियम् ॥

शूद्रामप्यगुप्तामेव । अन्ते भवोऽन्त्यः[6] तस्माज्जातो[7]ऽन्त्यजश्चाण्डलादिः तत्स्त्रीगमने ब्राह्मणस्य पणसहस्ररूपो दण्डः ।

(७१) न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ॥

स्पष्टम् ।

(७२) ऋत्विजं तु त्यजेद्याज्यो याज्यं चर्त्विक् त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टञ्च तयोर्दण्डः शतं शतम् ॥

निर्दोषपरिहर्तुः कर्मणि कर्मणि पणानां शतं दण्डः ।

(७३) दास्यं तु कारयेल्लोभाद्ब्राह्मणः सं[illegible]जान् ।
अनिच्छतः प्रभुत्वेन राज्ञा दण्ड्यः[8] शतानि षट् ॥

दास्यं दासकृत्यं पादप्रक्षालनादि ।

(७४) मात्स्ये—

यस्तु[9] संचारकस्तत्र पुरुषस्तु तथा भवेत् ।

---

१ छ - सहस्रं वै भवेद्दमः । २ क - शूद्रायां गुप्तायां वैश्यपञ्चाशतो दमः । ३ च – वैश्ये पञ्चशतं दमः । छ - वैश्यस्य पञ्चशतो दमः । ४ च दममेव वा । ५ च – शतीं वा । ६ च = अन्त्यःशूद्रः । ७ च – तस्माज्जातश्चाण्डालादिः । ८ छ = दाप्यः । ९ छ – यश्च ।

**पारदारिकवद्दण्ड्यो यश्चागारावकाशदः ॥**

या स्त्रियं पुरुषं वा अभिमार्गं प्रति सञ्चारयति यश्च तयोरभिचारस्थानं ददाति तौ पारदारिकवद्दण्ड्यावित्यर्थः ।

(७५) **बृहस्पतिः—**

**सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।**
**उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ॥**
**छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।**
**अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥**
**दमोन्तिमः समायान्तु हीनायामर्द्धिकः स्मृतः ।**
**पुंसः कार्योऽधिकायान्तु गमने सम्प्रमापणम् ॥**

(७६) यः सहसा बलेन परस्त्रियमनिच्छन्तीमभिगच्छति तस्य सर्वस्वमादय लिङ्गवृषणौ च छित्वा गर्दभेन परिभ्रामणं दण्डः। (७७) यस्तु छद्मना छलेन परस्त्रियमनिच्छन्तीमभिगच्छति तस्य सर्वस्वमादाय भगाङ्केनाङ्कयित्वा पुरनिर्वासनं दण्डः। (७८) यस्तु बलछले विहाय दूतादिद्वारा समानजातीयां परस्त्रियमभिगच्छति तस्यान्तिम उत्तमसाहसो दण्डः (७९) बलछले विहाय दूतादिप्रेषणेन प्रबोध्य हीनामन्यपूर्वां शूद्रामभिगच्छतो मध्यमसाहसो दण्डः। (८०) उत्कृष्टजातीयां तु यथा तथाभिगच्छतो मारणं दण्ड इत्यर्थः।

(८१) **मनुः—**

**गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।**
**स्तेये च श्वपदं कार्यं ब्रह्महन्यशिराः पुमान् ॥**

स्तेयं हिरण्यचौर्यम् ।

---

१ ख — यस्तयोरवकाशदः । २ छ — धनं तस्याखिलं हरेदित्यारभ्य छद्मना कामयेद्यस्त्वित्यन्तः पाठो नास्ति । ३ ख — मार्धिकः । ४ छ — गमनं । ५ छ — तस्य सर्वस्वमादयेत्यारभ्य परस्त्रियमभिगच्छतीत्यन्तः पाठो नास्ति । ६ ग — पुरभ्रामणं । च — गर्दभारूढं भ्रामयेत् । ७ छ — बोध्य हीनां । ८ छ — श्वापदं । ९ छ — ब्रह्महण्यशिराः ।

(८२) याज्ञवल्क्यः—

स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादि कर्त्तनम् ॥

(८३) कर्णादीत्यादिशब्दः केशादिपरः । तेन **बृहस्पतिवाक्येपि** पुंसः प्रमापणं स्त्रियाः कर्ण[1]च्छेदनं केशच्छेदेन सह द्रष्टव्यम् ।

(८४) विष्णुः—

गोगमने चान्त्यागमने[2] च[3] वध उत्तमागमने च ।

अन्त्या अस्पृश्या ।

(८५) नारदः—

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च[4] या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते ॥

माताऽत्र जननीव्यतिरिक्ता पितृपत्नी । आसां त्रिंशतेरन्यतमाया गमने शिश्नच्छेदः । गु[5]प्ताविषयमेतत् ।

(८६) याज्ञवल्क्यः—

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ।

१ च = कर्णकेशच्छेदनमिति द्रष्टव्यम् । छ स्त्रियाश्च कर्णकेशच्छेदनेन । २ च + छ = चान्त्यागमने । ३ च × छ = वा । ४ छ = तु । ५ च = गुप्त ।

(८७) आसां षण्णां मध्ये यथोक्तं[1] प्रतियोगिनं या सकामा रमयति तस्या[2] अपि लिङ्गच्छेदनपूर्वको वधः ।

(८८) **आपस्तम्बः—**

**नाश्य आर्य्य[3]: शूद्रायाम् ।**

शूद्रायामन्यपूर्वायां[4] कृताभिगम आर्यो ब्राह्मणो नाश्यो निर्वास्यः[5] ।

(८९) **शूद्रस्यत्वद्वृत्तौ गोतमः—**

**आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं गुप्ता चेद्वधोऽधिकः ।**

आर्यस्त्री त्रैवर्णिकस्त्री ।

(९०) **आपस्तम्बः—**

**वध्यः शूद्र आर्यायां दारांश्चास्याकर्षयेत्[6] ।**

अस्य व्यक्तव्यभिचारतः[7] शूद्रस्य दारान् भार्यामाकर्षयेत् । दासीं-कुर्यादित्यर्थः ।

(९१) **एतस्य वधे प्रकारमाह बौधायनः—**

**शूद्रं कटाग्निना दाहयेत्[8] ।**

द्विजस्त्रीगमन इति शेषः । कटो वीरणः[9] ।

(९२) **ब्राह्मणीरन्तार[10]मित्यनुवृत्तौ यमः—**

**शूद्रं तु घातयेद्राजा शयने तप्त आयसे ।**
**दहेत्पापकृतन्तत्र[11] काष्ठैः पर्णैस्तृणैस्तथा ॥**

---

१ च = या यथोक्तं । छ मध्ये वा यथोक्तं । २ छ = तस्यापि । ३ छ = आर्यस्तु । ४ छ = च = अनन्यपूर्वायां । ५ छ = विवास्यः । ६ छ अस्यापकर्षयेत् । ७ छ + च + ङ = व्यभिचारवतः । ८ छ + च = दहेत् । ९ च = वीरणम् । १० च = गन्तार । ११ च = दहेच्च पापकृत्तत्र ।

(९३) हारीतः—

श्रेयसः शयनशायिनं राजा बध्वा श्वभिः खादयेत्।
काष्ठैश्चैनं दाहयेत्।[1]

श्रेयस उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनम्।

(९४) गौतमः —

श्वभिस्तु खादयेद्राजा हीनवर्णागमे[2] स्त्रियम्।

(९५) वसिष्ठः—

शूद्रश्चेद्ब्राह्मणीं गच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत्। पूताभवतीति विज्ञायते। वैश्यश्चेद्ब्राह्मणीं गच्छेल्लोहितदर्भैर्वेष्टयित्वा[3] वैश्यमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूताभवतीति विज्ञायते। राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपर्णैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत्। पूता भवतीति विज्ञायते। एवं वैश्यो राजन्यायां मैथुनमाचरन्। शूद्रस्तु राजन्यावैश्ययोः।

महापथो राजपथः।

(९६) यमः—

वृषलं सेवते यातु ब्राह्मणी मदमोहिता।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम्॥

---

१ च – दहेत्। छ – काष्ठैश्चैनं दाहयेदिति नास्ति। २ छ – वर्णगमे। ३ छ – शरपत्रैर्वेष्टयित्वा।

वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्द्दभेन तु ॥

वध्यघातिनां सूनानियुक्तचाण्डालानाम् ।

(९७) बृहस्पतिः—

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः ॥
छिन्ननासौष्ठकर्णान्तां परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥

(९८) हन्यादित्यनुवृत्तौ विष्णुः—

स्त्रियमशक्तभर्तृकां तदतिक्रामणीञ्च ।

अशक्तभर्तृकां पत्याऽनुपभुक्तां तदतिक्रामणीं पुरुषान्तरगामिनीम् । मिलितं चेदं हननिमित्तम् ।

(९९) धनदण्डे कात्यायनः—

नास्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यते ।
प्रभुणा शासनीयास्ता राजा तु पुरुषन्नयेत् ॥

(१००) ग्राह्याः दण्डार्थं धर्त्तव्याः किन्तु राजा पुरुषं तत्पतिं तां प्रापयेदथ तत्पतिद्वारा तद्दण्डं गृह्णीयादिति तात्पर्य्यम् ।

(१०१) कात्यायनः ।

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।

---

१ ख—न च । २ घ शूलानियुक्त । ३ च पुंसाङ्गस्पर्शनादिना । ४ ख—भिन्न । ५ ख + छ—भर्तृकां पत्यानुपभुक्तां तदतिक्रामणीं पुरुषान्तरगामिनीम् । मिलितं चेदं हननिमित्तम् । ६ क—दहननिमित्तम् । ७ ख + छ—पराध्यति । ८ छ सा । ९ घ—किन्तु राजपुरुषं तत्पतिं प्रापयेत् । च—किन्तु राजा तत्पतिपुरुषं प्रति ताम्प्रापयेत् । छ—ताम्प्रतिपादयेत् ।

तावत्सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः ॥

अभिग्रहोऽभिसारः ।

(१०२) मात्स्ये—

बलात्सन्दूषयेद्यस्तु परभार्यां कथञ्चन ।

वधो दण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः ॥

---

## अथ वेश्याऽभिगमनदण्डः ।

(१०३) तत्र व्यासः—

परावरुद्धागमने पञ्चाशत्पणिको दमः ।

प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः ॥

परावरुद्धा व्यभिचारिण्येव केनचिन्नियतेन जारेण धृता ।

(१०४) याज्ञवल्क्यः—

प्रसह्य दास्यागमने दण्डो दश पणः स्मृतः ।

बहुना[2] यद्यकामासौ चतुर्विंशतिकः पृथक् ॥

अयोनौ गच्छतस्तेषां[3] पुरुषं वापि मेहतः ।

चत्वारिंशत्पणो दण्डस्तथा प्रव्रजितागमे ॥

(१०५) असौ दासी यद्यकामा सती नैरन्तर्येण बहुभिरभिगम्यते[4][5] तदा तेषां प्रत्येकं चतुर्विंशतिपणात्मको दण्डः । अयोनौ स्त्रिया एव मुखादौ गच्छतः मेढ्रप्रयोगं[6] कुर्वतः । पुरुषं मेहतः अतिरागेण पुरुषमभिगच्छतः । प्रव्रजिता तापसी ।

---

१ छ = अभिगम । २ च = बहूनां । ३ च = तासां । ४ च = बहुभिर्गम्यते । ५ छ = प्रतिग-म्यते । ६ च – प्रवेशने ।

(१०६) नारदः—

पशुयोनावतिक्रामन् विनेयः स दमं शतम् ।
मध्यमं साहसं गोषु तदेवान्त्यावसायिनाम्[1] ॥

अतिक्रामन्मैथुनं कुर्वन् पणशतं दण्ड्यः ।

(१०७) तथा—

सुवर्णन्तु भवेद्दण्ड्यो गां व्रजन्मनुजोत्तमः ।

(१०८) मध्यमं साहसमिदं वैश्यक्षत्रिययोः[2] शूद्रस्य गोगमने पूर्वं वधाभिधानात् मनुजोत्तमस्य ब्राह्मणस्याग्रे सुवर्णरूपदण्डाभिधानात् ।

(१०९) तथा—

वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्क[3]पणं[4] स्मृतम् ।

यद्वेश्याभिगमे[5] शुल्कं पञ्च[6]शतरूपं तावान् वेश्यागामिनो ब्राह्मणस्य दण्डः ।

(११०) व्यासः—

बहुभिर्भुक्तपूर्वा या ताञ्च्छेयुर्न्नराधमाः[7] ।
तस्या[8] वेश्यावदिच्छन्ति दण्डनं न तु दारवत् ॥

दारवत् कुलस्त्रीवत् ।

(१११) नारदः—

अगम्यागामिनः शास्ति[9]र्द्दण्डो राज्ञा प्रकीर्त्तितः ।
प्रायश्चित्तविधानन्तु पापराशेर्न्निशोधनम् ॥

(११२) यत्तु—

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।

१ छ+ग+च=अन्त्यावसायिषु । २ छ=क्षत्रयोः । ३ ग=वैश्याशुल्क । ४ च=समं पणम् । ५ ग=यद्वैश्याभिगमं । छ+च=यद्वेश्यागमने । ६ ग+छ=पञ्चाशत् पणरूपं । च=पञ्चाशत्पणरूपं तावानेव । ७ च=गच्छेद्योनराधमः । ८ क=तस्य । ९ छशास्ति ।

निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

इति । तत्प्रायश्चित्तरूप[1]दण्डपरम् । प्रकरणात् । अत एव **कल्पतरौ** सुवर्णस्तेये मुषलाघातप्रकरण एव तल्लिखितमिति ।

---

## अथ स्त्रीपुरुषधर्मः ॥ १६ ॥

(१) तत्र याज्ञवल्क्यः—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यन्न क्वचित्स्त्रियाः ॥

विन्नां विवाहिताम् । तेषां पुत्राणाम् ।

(२) बृहस्पतिः—

अप्रयच्छन्पिता काले पतिश्चाऽनुपयन्नृतौ ।
पुत्रश्चाऽभक्तदो मातुर्ग्राह्या दण्ड्याश्च धर्मतः ॥

(३) मनुः—

नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः ।
अरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥

(४) तथा—

साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये[4] वर्त्तमाना सा स्नेहाच्च[5] न निवारिता ।
अपथ्या तु भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

---

१ छ दण्डरूपदण्डपरम् । २ छ = स्तेय । ३ च । छ = मातुर्गाह्यो दण्ड्यश्च । ४ च = स्वकामे । ५ च - स्नेहे नारी । छ - स्नेहेन न ।

(५) तथा—

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥

(६) मनुः—

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यः[1] स्वधर्मे न तिष्ठति ॥
कार्षापणं भवेद्दण्ड्यो यथान्यः[2] प्राकृतो जनः ।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥

कार्षापण ताम्रकर्षम्[3] । स्वदण्डो[4] राज्ञा अप्सु प्रक्षेपणीयः **ईशो दण्डस्य वरुण इति गोतम**[5]वचनस्वरसात् ।

(७) मनुः—

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं[6] तन्मनोरनुशासनम् ॥

(८) ऋण इति । गृहेऽपलप्य करणे[7] ऋणमभ्युपगच्छन् पणशते[8] पञ्च पणान् करणेऽप्यपलपन् प्रमाणेन[9] ऋणस्थैर्ये[10] दश पणान् भङ्गी[11] दण्ड्य इत्यर्थः[12] ।

(९) साक्ष्यधिकारे मनुः—

लोभात्सहस्रं दण्ड्यस्तु[13] मोहात्पूर्वं तु साहसम् ।
भयाद्वै मध्यमो दण्डो[14] मैत्रात्पूर्वं चतुर्गुणम् ॥

---

१ छ=यस्तु । २ च+छ=यत्रान्यः । ३ छ=ताम्ररूपम् । ४ च+छ=स्वदण्डश्च । ५ च=गोतमवचनात् । ६ च=तु द्विगुणं । ७ क=करणेन । ८ च=पणशतात् । ९ क=प्रमापणेन । १० छ=स्थैर्ये पणशते । ११ छ=भण्डी । १२ ग=दाप्य इत्यर्थः । च=दशपणान्दण्ड्य । १३ छ=दण्डस्तु । १४ ग+छ=द्वौ मध्यमौ दण्डौ । च=मध्यमं दण्डं ।

कामाद्दशगुणं पूर्वं[1] क्रोधात्तु त्रिगुणं[2] परम् ।
अज्ञानाद्द्वे शते पूर्णे[3] बालिश्याच्छतमेव तु ॥
एतानाहुः कूटसाक्ष्ये[4] प्रोक्तान्दण्डान्[5] मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय[6] च ॥
कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत् ॥

(१०) लोभान्मिथ्यानिगदे पणसहस्रम् । मोहात्तन्निगदे[7] सार्द्धपणशतद्वयम् । भयात्तु[8] निगदे पञ्चपणशतीम् । मैत्रान्निगदे[9] पणसहस्रम् । कामात्तत्स्त्री-[10]रमणादिरूपान्निगदे सार्द्धपणसहस्रद्वयम् । क्रोधात्तन्निगदे पणसहस्रत्रयम् । बालिश्यादनवधारणरूपात्तन्निगदे[11] पणशतं कूटसाक्षी[12] दण्ड इत्यर्थः ।

(११) कूटसाक्ष्यमिति[13] । असकृत्कूटन्निगदतां क्षत्रादीनां[14] त्रयाणामपि साक्षिणां यथोक्तदण्डानन्तरं[15] देशान्निष्कासनम्[16] । तादृशस्य तु समग्र-धनसहितस्यैव[17] ब्राह्मणस्य देशान्निष्कासनमित्यर्थः[18] ।

(१२) मनुः—

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥

तथा ताम्रिकः कार्षापणः[19] ।

---

१ छ = प्रोक्तं । २ च = द्विगुणं । ३ छ = पूर्वे । ४ छ = कौटसाक्ष्ये । ५ छ = प्रोक्तदण्डान् । ६ छ = व्यभिचारार्थं स्वधर्मनियमाय च । ७ ग + च = मोहात्तु । ८ छ = भयात्तन्निगदने पणदश-शतीम् । ९ ग = मैत्र्यात्तु । छ = मैत्रात्तन्निगदे । १० ख + ग + छ = अज्ञानात्तन्निगदे पणशतद्वयम् । ११ ग + छ = अनवधानरूपात्तन्निगदे । १२ छ = साक्ष्ये । १३ च = कौटसाक्ष्यमिति । १४ छ = क्षत्रियादीनां । १५ ख = यथोक्त साक्षिणां दण्डनान्तरं । १६ ग = यथोक्तदण्डनान्तरं तादृशस्य तु । छ = देशनिष्कासनं । १७ च = तादृशस्यादण्ड्यस्तु । १८ छ = निष्कासनमात्र । १९ ग + च + छ = कार्षिकः पणः ।

(१३) तथा—

अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम् ॥
अनेन विधिना शास्यः[1] कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वन्तु चौरवद्दण्डमर्हति ॥

(१४) अवहार्यो दाप्यः सान्वयः[2] स्वामिवंश्यः । निरन्वयः तदन्यः । अनपसरः अपसरति द्रव्यमन्यतोन्यत्र[3] याति येन तत्प्रतिग्रहक्रियादि[4] तद्रहितश्चौरकिल्विषं चौरदण्डं[5] । अनेनेत्यादि । सान्वयस्यापि[6] ज्ञानपूर्वकं[7] भ्रात्रादिधनविक्रये[8] चौरवद्दण्ड इत्यर्थः ।

(१५) तथा—

धर्मार्थं येन दत्तं[9] स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत् ॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राजा[10] दाप्यः सुवर्णं स्यात्तस्यादेयस्य[11] निष्कृतिः ।

(१६) पश्चादिति । याचकश्च धर्मकर्म[12] नाकरोत् धनञ्चाग्रहीत्तदा[13] परावर्त्त्य[14] दाप्यः । यदि च प्रतिश्रुतं तद्याचते[15] तदा न देयं[16] यदि[17] गृह्णीयात्तदा सुवर्णं दण्ड्य इत्यर्थः ।

---

१ शास्याः । २ च = स्वान्वयः । ३ छ = अन्यतोयाति । ४ छ = क्रयादि । ५ च + छ = चौरवद्दण्डं । ६ च = स्वान्वयस्यापि । ७ छ = पूर्वं । ८ च = भ्रातृधनविक्रये । छ = विक्रेतुर्भ्रात्रादेः । ९ छ = येन यद्दत्तं । १० ग + च + छ = राज्ञा । ११ च + छ = स्तेयस्य । १२ च = कर्माणि । १३ च = धनञ्च गृहीतं । १४ छ = वृत्य । १५ छ तद्याचेत । १६ ग = न दाप्यं । १७ छ = यदि तु ।

# अथ दायविभागः ।

(१७) तत्र मुख्यकालमाह मनुः—

**ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।**
**भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥**

समं तुल्यं नात्र[1] विंशोद्धारादीति यावत् । (१८) नच प्रमीतपितृक[2] विभागमुपक्रम्यैव मनुना विंशोद्धारादिकथनान्न[3] तुल्यांशतेति वाच्यम् । तस्य गुणवज्ज्येष्ठपरत्वात्[4] विंशोद्धाराकांक्षिज्येष्ठपरत्वाद्वा । (१६) ननु यद्धनं पितुः स्वातन्त्र्यविषयस्तस्य तत्सत्वे तदिच्छयैव विभाग इति तद्विभागः पितुरूर्द्ध्वमित्यस्तु[6] मातुरूर्द्ध्वमिति कथं मातुस्तत्रास्वत्वात् । नच विभागमुपक्रम्य **अस्वतन्त्राः पितृमन्तो मातर्यप्येव-[7] मवस्थितायाम् इति शंखवचनादस्त्वेवमिति** वाच्यम् । अस्य[8] गुणवन्मातृस्तुतिपरत्वात् । नह्यस्वामिनोऽप्यपेक्षायुक्तिमतीति चेन्मैवं[9] पैतृकमित्यत्रैकशेषेण मातृधनस्याप्युपस्थितेर्मातृधन एव तदूर्द्ध्वगमनापेक्षया[10] अनेनोक्तत्वात् ।

(२०) अथ—

**पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुः पितुर्द्धनम्[11] ।**
**मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयाः[12] ॥**

इति **नारद** वचनेन मातृधने दुहितॄणां तदभावे दौहित्राणामेव ग्रहणाधिकारबोधनान्न[13] पुत्रस्य तद्ग्रहणाधिकार इति चेन्न । तस्यान्य-योगव्यवच्छेदपरत्वाभावात्[14] ।

---

१ च - न तु । २ च - पितृविभाग । ३ छ - विंशोद्धारकथनार्थं कथनात् कथं तुल्यांशतेति । ४ च - कथनात्कथं । ५ च - ज्ज्यैष्ठ्य । ६ छ - इति तु । ७ च - मातुरप्येव । छ - मातर्येव । ८ घ - अस्य तु । ९ छ - मैवमिति नास्ति । १० च + छ - गमनापेक्षाया । ११ च + छ - धनं पितुः । १२ छ - तदन्वयः । १३ ख - ग्रहणाधिकारवत् इति चेन्न । १४ ग + च - अस्यान्ययोगव्यवच्छेदाभावात् ।

(२१) अत एव—

**जनन्यां संस्थितायां तु समं सर्वे सहोदराः।**
**भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः॥**

इति **मनुरपि** समुच्चयमेवाह। (२२) एवञ्च पितुः स्वातन्त्र्यविषयो धनं पितरि प्रमीते विभजनीयं सति तु तस्मिन्नक्षमे।

(२३) तदुक्तं शंखेन—

**अकामे पितरि ऋक्थविभागो वृद्धे विपरीतचेतसि रोगिणि चेति।**

विपरीतचेतसि विप्लुतान्तःकरणे। क्षमे तु तस्मिन् जीवति तदिच्छयैव विभजनीयमिति वक्ष्यते। अथवा मृतेऽपि पितरि ज्येष्ठं पुरस्कृत्य वसेयुः।

(२४) तदाह मनुः—

**ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवेयुर्यथैव पितरन्तथा॥**

(२५) यो वा शक्तस्तं पुरस्कुर्युः।

तदाह नारदः—

**बिभृयाच्चेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता।**
**भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः।**

(२६) धर्मार्थं वा विभजेरन्।

---

१ च—रिक्थं। २ च विषयधनं। ३ ख—चेतसि विप्लुतान्तः करणेऽक्षमेतस्मिञ्जीवति तदिच्छयैव विभजनीयमिति वक्ष्यते। ४ च—तस्मिन्नक्षणोयम्। ५ च—नाकामे। ६ च—भागो। ७ च—वेति। छ—रोगिणि वा इति। ८ छ—निर्विण्णान्तः करणे। ९ क—क्षमेन्न। १० च—जीवति च। ११ च+छ—मृते पितरि। १२ च—पित्र। १३ च+छ—वेच्छतः।

तदाह मनुः—

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक् क्रिया ॥

(२७) कथं विभागे धर्मवृद्धिः।

तत्र बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं[1] भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

(२८) स्वा[2]साधारणीभूतेन विभक्त[3]धनेन भाग्यन्तरनै[4]रपेक्ष्येण स्वमात्रेच्छयेज्याद्य[5]-नुष्ठानेन विभागे धर्मवृद्धिः।

## अथ जीवत्पितृकविभागः।

(२९) तत्र पुत्रा[6] विभजेरन्नित्यधिकारे नारदः—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च।
निवृत्ते रमणे चापि पितर्युपरतस्पृहे ॥

प्रत्तासु विवाहितासु। रमणे पितू[7]रतिसामर्थ्ये उपरतस्पृहे विषय-स्पृहाशून्ये।

(३०) याज्ञवल्क्यः—

विभागञ्चेत्पिता कुर्यात् स्वेच्छया विभजेत्सुतान्।

---

१ ग = एकत्तावद्धि। २ च = असाधारणी। ३ च = विभक्तेन। ४ छ = नैरपेक्ष्य। ५ च = इज्याद्यनुष्ठानेन। छ = स्वमात्रेच्छया इज्यानुष्ठान। ६ च + पुत्रान्। ७ च = पितृरतिसामर्थ्ये।

**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥**

इयञ्च स्वेच्छा स्वार्जिते ।

(३१) **तदाह विष्णुः—**

**पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे ।**

स्वयमुपात्तं स्वार्जितम्[1] । तद्वत् स्वाभ्युद्धृतमपि[2] मनुवचनानुरोधात् । (३२) अत्र[3] च पितृद्रव्यानुपश्लेषस्तन्त्रम् । तदुपश्लेषार्ज्जितस्य तु तद्वत् साधारण्यादेव[4] । (३३) तथा च पित्रा पूर्वपुरुषद्रव्यानुपश्लेषेण यदर्जितं तस्य समविभागे विषमविभागे[5] च पितैव प्रभुः । (३४) अत्र[6] च विभागोपि तदिच्छाबलादेव । अनीशताप्यत्रैव पुत्राणाम् ।

(३५) **मनुः[7]—**

**पैतृकं तु पिता द्रव्यमनवाप्यं[8] यदाप्नुयात् ।**
**न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ॥**

(३६) स्वपित्र्य[9]द्रव्यमपि परग्रस्तं[10] यत्पित्रा उद्धृतं[11] यच्च स्वयमर्ज्जितं तत्रोभयत्रापि पितुरिच्छयैव[12] पुत्राणां भागो नत्वनिच्छयेत्यर्थः ।

(३७) **तथा—**

**पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।**
**विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥**
**प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।**
**तदभावे तु तनयास्समांशाः परिकीर्त्तिताः ॥**

१ च = स्वार्जितमित्यर्थः । २ च + छ = स्वाभ्युद्धृत । ३ च = तत्र । ४ च = साधारण्यमेव । ५ ग + छ + च = विषमविभागे चाविभागे । ६ च = स एव विभागस्तदिच्छाबलादेव । छ = अत्र विभागोपि । ७ च = तदाह मनुः । ८ च = अनवाप्तं । छ = अनवाप्य । ९ च = पितृ । छ = पित्र्य । १० ग = यत्परग्रस्तं । ११ च + छ = अभ्युद्धृतं । छ = यत्पित्राभ्युद्धृतं । १२ छ = पितुरिच्छयैव विभागो ।

(३८) हृतं परैरपहृतं पितामहेनाशक्तया[1] नोद्धृतं पित्रा तूद्धृतं[2] यच्च पित्रा विद्यादिनाऽर्जितं[3] तस्य विभागे दाने च पितुरेवेच्छा तन्त्रम् । (३९) एवञ्च[4] विद्यार्जिते[5] तथा प्राचीनधनानुपश्लेषेण शौर्येण प्रकारान्तरेण[6] वार्जिते तथा तदनुपश्लेषेणाप्युद्धृते[7] च धने पितुरिच्छयैव दानविभागादि[8] । एवंविध एव च धने ज्येष्ठायाधिकदाने स्वभागद्वयकरणे च पितुरिच्छा । एवंविधद्रव्य एव याज्ञवल्क्योक्ता समांशतापि[9]—

(४०) **विभागं चेत्पिता कुर्यात्स्वेच्छया विभजेत्सुतान् ।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥**

इति तद्वचनस्यापि[10] पितृस्वातन्त्र्यविषयमेव धनमधिकृत्य प्रवृत्तत्वात् ।

(४१) **अत्रैव समांशकरणपक्षे विशेषमाह स एव—**
**यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥**

(४२) अत्रोपक्रमे पितुर्विभागकर्तृत्वेनोपस्थितत्वात्[11] तत्प्रनियोगिकमेव पत्नीत्वमवगम्यते । (४३) समांशिका इति । याभ्यः स्त्रीधनं दत्तं तत्समधनवत्योऽन्या[12] अपि पत्न्यः पित्रा कार्याः । यदा तु स्वयमधिकं[13] गृह्णाति पुत्रेभ्यः किञ्चिद्ददाति द्व्यशं वा स्वयं गृह्णाति तदा स्वभागादेव तावद्धनं ताभ्यः[14] पत्न्या देयम् । अतएव **यदि कुर्यात्समानंशान्** इति समांशकरणपक्ष एव पृथग्दानमुक्तम् ।

(४४) **हारीतः—**

---

१ ग + च + छ = पितामहेन चाशक्तया । २ च = तदुद्धृतं । ३ च = विद्याद्यर्जितं । छ = यच्च विद्यार्जितं । ४ छ = एवञ्च विद्यार्जिते इति नास्ति । ५ च = विद्याप्राप्ते । ६ ग = प्रकारान्तरे वार्जितं । ७ ग = धृते च धने । च + छ = अभ्युद्धृते । ८ च = विभागादिरिति । ९ च = समांशितापि । १० ख + छ = तद्वचनस्य पितृस्वातन्त्र्य । ग + ङ = मनुवचनस्य पितृ । च = इति वचनस्य । ११ ग = करणत्वेन । १२ छ = धनमात्तवत्यो । १३ छ = स्वयमर्जितं । १४ छ = ताभ्यो देयम् ।

**स्वल्पेन वा संविभज्य[1] भूयिष्ठमादाय तिष्ठेत्[2]।**
**यद्युपदश्येत्[3] पुनस्तेभ्यो गृह्णीयात् ॥**

उपदश्येत् निर्द्धनो भवेदित्यर्थः । इदमपि स्वार्जितपरम् ।

(४५) **नारदः—**

**द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।**

(४६) **शंखलिखितौ—**

**स यद्येकपुत्रः स्याद्द्वावंशावात्मनः कुर्याद्द्विपदचतुःपदेषु रूपमधिकं वृषभो ज्येष्ठाय गृहं यवीयसेऽन्यत्र पितुरवस्थानात् ।**

रूपं वस्तु । (४७) तथाच पिता अंशद्वयं[4] दासेषु श्रेष्ठमेकम् । एवं पशुष्वपि गृह्णीयात् । एको वृषः सगुणज्येष्ठाय । पित्रवस्थानातिरिक्तं गृहं सगुणकनिष्ठाय देयम् । इदं च पितुरंशद्वयमेकपुत्रत्वे सति वचनयोरेकमूलकल्पनालाघवात् । पितुरस्वार्जितधनविषयमेतत् (४८) स्वार्जिते तु स्वेच्छया[5] विभजनीये एकपुत्रत्वस्याप्रयोजकत्वात्[6] । एकपदञ्चेदं[7] श्रेष्ठवाचि न तु संख्यावाचि । अन्यथा **ज्येष्ठाय यवीयसे** इति विरुद्ध्येत । (४९) तस्मात्सगुणौ ज्येष्ठकनिष्ठौ उक्तोद्धारभाजौ कार्यावन्ये च[8] पुत्रा धनेषु[9] समांशाः । पिता तु सोद्धारद्व्यंशभागिति संक्षेपः ॥

(५०) **आपस्तम्बः—**

**एकधनेन ज्येष्ठं तोषयित्वा जीवत्पुत्रेभ्यो विभजेत्समम् ।**

(५१) जीवत्पदान्मृतस्य पत्न्या भागो नास्ति । पुत्रस्य[10] सोस्ति **आत्मा वै**

१ छ – विभज्य । २ च – वसेत । ३ छ उपदश्येत । ४ ग पिता त्वंशद्वयं । ५ छ + ग – स्वेच्छा । ६ छ – एकपुत्रस्या । ७ छ चेद्द । ८ छ तु । ९ छ धने । १० घ + छ – पुत्रस्य तु । च – तत्पुत्रस्य तु ।

पुत्र इत्यभिधानाद्वाक्यान्तराच्च[1]। (५२) जीवन्निति तु रत्नाकरे पाठः। स न युक्तो[2] विभागकर्तृ तयैव जीवनस्य प्राप्तत्वे[3] निरर्थकत्वात्। एक धनेन श्रेष्ठधनेन।

(५३) ज्येष्ठे देवलः—

बह्विर्वर्णेषु[8] चारित्र्यादग्रजे[4] पूर्वजन्मतः[5]।
यस्य जातस्य समये[6] पश्यन्ति[7] प्रथमं मुखम्॥
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्।

(५४) यस्य सवर्णायां[8] जातस्य मुखं प्रथमं पश्यन्ति[9] तस्मिन् सन्तानः प्रतिष्ठितः पितरः प्रतिष्ठिताः ज्यैष्ठ्यं च प्रतिष्ठितमित्यर्थः। तेन पितुः प्रथमापत्यं पुमान् ज्येष्ठः। पतिसवर्णायान्तु पश्चादुत्पन्नोऽपि[10] ज्येष्ठः।

(५५) तदुक्तं मनुना—

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥

(५६) तेन नानावर्णासु भार्यासु पतिसवर्णायां पश्चाज्जातोऽपि ज्येष्ठ इत्यर्थः।

(५७) तथा—

यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥

(५८) मनुः—

ज्येष्ठस्य विंश उद्धारः पितृद्रव्याच्च[11] यद्वरम्।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥

(५९) तथा—

---

१ ग = इत्यभिधानाच्च। २ च = स च न युक्तः। ३ च = प्राप्तत्वेन। ४ ग + छ = यमयोः। च = यमजे। ५ छ = जन्मनः। ६ च = यमयोः। ७ छ = पश्यति। ८ छ = सवर्णाजातस्य। ९ छ = पश्यति। १० छ = पश्चात्तदुत्पन्नोपि। ११ च = सर्वद्रव्याच्च।

सर्वेषां धनजातानामाददीताग्र्यमग्रजः ।
यच्च सातिशयं किञ्चिद्दशतश्चाप्नुयाद्वरम् ॥

(६०) बौधायनः—

दशानां चैकमुद्धरेज्ज्येष्ठः सममितरे विभजेरन् ।
पितृरिक्थहराः पुत्राः सर्व एव समांशतः[1] ।
विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति ॥

(६१) अयञ्च[2] ज्येष्ठस्य गुणवत्तरत्वे । स्वल्पगुणत्वेऽपि[3] किञ्चित्पारितोषिकमानतिकरमिति वर्तुलार्थः ।

(६२) देवल :—

ज्येष्ठस्य दशमं भागं न्यायवृत्तस्य दापयेत् ।

(६३) एतच्च ज्येष्ठस्याग्निवेदवत्वे अन्येषां[4] चातिनिर्गुणत्वे इति हलायुध-पारिजातौ ।

(६४) बृहस्पति :—

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव:ते पालनीयाः पतितास्ते स्युरन्यथा ॥
इति[5] पित्रर्जितपरम् ।

(६५) मनु :—

भ्रातृणामविभक्तानां यद्युत्थानं भवेत्सह ।
न तत्र विषमं भागं पिता कुर्यात्कथञ्चन ॥

(६६) इदं तु तुल्यव्यापारैर्भ्रातृभिरर्जिते अतो न विरोधः ।

---

१ च = समांशिनः । २ घ = अयञ्च दशांशो ज्येष्ठस्य गुणवत्तरत्वे स्वल्पगुणत्वेऽपि किञ्चित्पारितोषिकमानतिकरमिति वर्त्तुलार्थः । च = अयन्तु ज्येष्ठस्य गुणवत्तरत्वे विंशांशः । गुणवत्वे तु किंचित्पारितोषिकं नातिरिक्तमिति वर्त्तुलार्थः । ३ ग + छ = विशांशस्तु गुणवत्वे समगुणत्वे तु । ४ च = अन्येषां च निर्गुणत्वे । ५ ग = इदं ।

(६७) बृहस्पतिः—

जन्मविद्यागुणज्येष्ठो द्व्यंशं[1] दायमवाप्नुयात् ।
समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः ॥

(६८) इदं[2] गुणवत्तमपितृवत्परिपालकज्येष्ठविषयम् ।

(६९) तथा—

पितृरिक्थहरा: पुत्रा: सर्व एव यथांशतः[3] ।
विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति ॥

(७०) व्यासः—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकम्[4] ।
धनं शौर्यादिनाऽवाप्तं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं कार्य्यं शेषास्तु समभागिनः ॥

(७१) शौर्यादिना असाधारणोपायादिनापि[5] चेत् साधारणधनोपश्लेषादर्जयति[6] तदाऽर्जको द्व्यंशभागी स्यादित्यर्थः[7] ।

(७२) वसिष्ठः—

येन चैषां[8] समुत्पादितं[9] स द्व्यंशमाहरेत् ।
इदमपि पूर्ववत् ।

(७३) शाङ्खलिखौ[?]:—

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।
अनेकपितृकाणान्तु पितृतो भागकल्पना ।

---

१ च + छ – दायादवाप्नुयात् । २ घ – इदमपि । च – गुणवत्त्व । ३ च – समांशतः । ४ च – वाहनायुधम् । ५ ख । ग + च + छ असाधारणोपायेनापि चेत् । ६ छ = धनश्लेषेणार्जयति । ७ छ – भागित्यर्थः । ८ ख + छ – तेषां । ९ ग – यत्स्वयमुत्पादितं । च – स्वयमुपार्जितं । छ – तेषां यत्स्वयमुपार्जितं । ङ – येन चैषां यत्स्वयमुपार्जितं ।

(७४) सामान्येति । सामान्यस्यार्थस्य कोपि भागो यदि कृषिवाणिज्यादिना[1] वर्द्धनङ्करोति तदापि तस्य नांशाधिक्यमित्यर्थः । इदं त्वन्येषामप्येकरूपत्वे अन्यथा वशिष्ठविरोधः[2] स्यादित्यवधेयम्[3] । (७५) अनेकेति । यदि त्वविभक्तानामेव भ्रातॄणां प्रमीतानां प्रत्येकं बहवः पुत्राः प्रत्येकं कृष्यादिना[4] साधारणधनं वर्द्धयंति[5] । तदापि ते[6] पितृवत्[7]प्रत्येकं न भागभाजः । किन्त्वेकजाः सर्वेऽपि[8] स्वपितृमात्रभागभाज इत्यर्थः ।

(७६) नारदः—

कुटुम्बार्थेषु चोद्युक्त[9]स्तत्कार्यं कुरुते तु यः ।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः ॥

(७७) यः कृषिवाणिज्यादिना कुटुम्बार्थे व्यापृतः तदाश्रमं संवर्द्धयति[10] स भाग्यन्तरसममेवांशं[11] लभते । अतस्तस्यायासानुसारेणान्न[12]वस्त्राश्वादिना[13] भागिभिर्वैलक्षण्येन पूरणङ्कर्त्तव्यमित्यर्थः ।

(७८) मनुः—

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्वाह्यः[14] स्वकादंशात् किञ्चिद्दत्वोपजीवनम् ।

(७९) यः स्वकर्मणा[15] स्वव्यवसायेन जीवितुं शक्त साधारणन्धनं विभज्य न गृह्णीयात् किन्तु त्यजेत्[16] स भ्रातृभिर्गृहीतभागैः स्वस्वभागाद्धनमाकृष्य पूरणीय[17] इत्यर्थः । पूर्वनारदवाक्यस्याप्ययमेवार्थ इति-हलायुधः (८०) प्रकाशकारस्तु यो भागिष्वाश्रमार्थं[18] व्यापृते

---

१ ग—वाणिज्येन वा । २ छ—अन्यथाऽवशिष्ट । ३ ग+च+छ—इति द्रष्टव्यं । ४ छ कृष्यादि । ५ च+छ—कुर्वन्ति । ६ च—तदा ते पितृवन्न भागभाजः । ७ग पितृव्यवत् नांशभाजः प्रत्येकं । ८ छ—सर्वेपि पितृ ९ छ—यद्युक्तः । १० छ—तदाश्रयं संवर्द्धयति । ११ च—समभागं । १२ च—स्वतस्तस्या । १३ च वस्त्रादिना । १४ च+छ—स निर्भाज्यः । १५ छ—यः कर्मणा । १६ छ—त्यजेत् इति नास्ति । १७ ग—परिपूरणीयः । १८ छ—यो भोगिषु धनार्थं । च—येन भागिषु धनार्थे ।

च्वालस्यादिना[1] न व्याप्रियते स व्यापारजनिताद्धनाद्बहिः कार्य्यो मूलधन[2]मात्रभागी कर्त्तव्य इत्यर्थकतया **मनुवाक्यमिदं** व्याख्यातवान्।

(८१) **कात्यायनः—**

**अविभक्ते[3] निजे प्रेते तत्सुतं ऋक्थभागिनम्।**
**कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥**
**लभेतांशं स पित्र्यन्तु[4] पितृव्यात्[5]तस्य वापि तत्सुतात्।**
**स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्॥**
**लभेत तत्सुतो वापि निवृत्तिः परतो भवेत्।**

(८२) निजे[6] भ्रातरि। तत्सुतं[7] भ्रातुः पुत्रम्। जीवनं भागः। कीदृशं भागं[8] भ्रातृजो लभते इत्यपेक्षायामाह पैत्र्यमंशमिति[9]। तत्सुतः यस्य धनं विभज्यते तस्य प्रपौत्रः। तथा च गृहिणः[10] पुत्रसंख्यया विभजनीयम्। तेन पुत्रस्य यो भागः स तेन तत्पुत्रैर्वा तत्पौत्रैर्वा ग्राह्यः। निवृत्तिरिति। न तु तत्प्रपौत्रैरित्यर्थः[11]। इदं सहवासपरम्। एवञ्च प्रमीतस्य पत्नी न भागभागनभिधानात्।

(८३) **देवल :—**

**अविभक्तविभक्तानां कुल्यानां वसतां सह।**
**भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः॥**

(८४) बीजिचतुर्थमभिव्याप्य दायविभागः[12][13]। विभक्तानामिति[14]। संसर्गादौ सहवासे सतीयं व्यवस्था **वसतां सह** इतिस्वरसात्।

---

१ ग – च्वप्यालस्यादिना। २ छ – मूलमात्र। ३ च – अनुजे प्रेते। ४ च – स्वपित्र्यन्तु। ५ च + छ = पितृव्यात्तस्य वा सुतात्। ६ च – अनुजे। ७ च + छ – भ्रातृजम्। ८ छ = भागं लभते। ९ छ – पित्र्यमंशमिति। १० ग + च + छ = गृहिणो धनं। ११ ग – तत्प्रपौत्रैर-पौत्यर्थः। १२ च + विभक्तानां वाविभक्तानां। १३ च – दायभागः। १४ च + छ = विभक्तानामपि।

(८५) **वसिष्ठः—**

**अथ भ्रातॄणां दायविभागो[1] याश्चानपत्याः स्त्रियस्तासां चापुत्रलाभात् ।**

स्त्रिय इत्यत्र[2] भ्रातॄणामित्यन्वयः[3] । (८६) तथा च विधवायाः शङ्कित-पुत्राया भ्रातुर्भार्याया भागः कर्त्तव्यः । तस्याः पुत्रे जाते[4] स भागस्तत्पुत्रस्य । पुत्रे त्वनुत्पन्ने[5] स भागस्तस्या देवरादिभिर्देव ग्राह्य इत्यर्थः ।

(८७) **पितुरित्यनुवृत्तौ बृहस्पतिः—**

**तदभावे तु जननी तनयांशसमांशिनी ।**
**समांशा मातरस्त्वेषां[6] तुरीयांशाश्च कन्यकाः ॥**

(८८) तदभावे पितुरभावे जननी पुत्रवती मातरः सपत्नीमातरोऽपुत्रा एताः सर्वाः पुत्रतुल्यभागा[7] एषां भागिनां भगिन्यश्चाविवाहिता विवाहार्थं[8] भ्रात्रंशतुरीयांशभाज इत्यर्थः ।

(८९) **नारदः-**

**येषां तु न कृताः[9] पूर्वं संस्कारविधयः क्रमात् ।**
**कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥**
**अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।**
**अवश्यकार्याः संस्कारा भ्रातॄणां[10] पूर्वसंस्कृतैः ॥**

संस्कारा उपनयनान्ताः ।

(९०) **व्यासः-**

**असुतास्तु[11] पितुः पत्न्यः समांशाः[12] परिकीर्त्तिताः ।**

---

१ च + छ = दायभागो । २ ग + च + छ = इत्यत्रापि । ३ छ = इत्यर्थः । ४ ङ + च + छ = प्रसवे जाते । ५ च = तूत्पन्ने सति । ६ छ = तेषां । ७ च = भागा इत्यर्थः । ८ ङ = विवाहार्थं तुरीयांशभाज इत्यर्थः । छ = स्वांशतुरीयभाज इत्यर्थः । ९ च = पित्रा । १० च + ग = भ्रातृभिः । ११ च = अपुत्रास्तु । १२ च + छ + ख + ग + घ = समानांशाः प्रकीर्त्तिताः ।

पितामह्यश्च[1] ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥

(९१) याज्ञवल्क्यः-

पितुरूर्ध्वं विभजतां माताप्यंशं समं लभेत्[2] ।

(९२) कात्यायनः-

प्रच्छादितन्तु[3] यत्नेन पुनरागत्य तत्समम् ।
भजेरन्भ्रातृभिः सार्द्धमभावेऽपि हि तत्सुताः ॥
अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत् ।
पश्चात्प्राप्तञ्च[4] विभजेत् समभागेन तद्भृगुः ॥
क्षेत्रं साधारणं त्यक्त्वा[5] योऽन्यदेशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमो वापि सप्तमश्चैव[6] यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥

इदन्तु देशान्तरागतविषयम् ।

(९३) तथा-

यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥

---

१ च=पितामह्यस्तु सर्वास्ताः । छ=पितामह्यश्च सर्वास्ताः । २ छ=हरेत् । ३ ग=प्रच्छादिस्तु । ४ च+छ=प्राप्तं विभज्येत । ५ छ=कृत्वा । ६ च=षष्ठापि । छ=सप्तमो वापि ।

## अथ भागानर्हाः ।

(९४) तत्र बृहस्पतिः-

सवर्णाजोप्यगुणवान्नार्हः स्यात्पैतृके धने ।
तत्पिण्डदा[१]: श्रोत्रिया ये धनन्तेषां[२] विधीयते ॥

(९५) मनुः-

सर्वं एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ।
विकर्मस्था विरुद्धकर्मासक्ताः ।

(९६) शङ्खः-

अपपात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते ।
अपपात्रितः अत्युत्कटेन दोषेण ज्ञा[३]निभिः कृतघटापवर्जनः पितृरिक्थग्रहणश्राद्धतर्पणेषु नाधिकारी भवतीत्यर्थः ।

(९७) मनुः-

अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥
सर्वेषामपि तन्न्याय्यं[४] दातुं शक्यं मनीषिणा[५] ।
ग्रासाच्छादनमत्यन्तं[६] पतितो ह्यददद्भवेत् ॥
यद्यर्थिता तु दारैः स्यात्क्लीवादीनां कथञ्चन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥

(९८) निरिन्द्रियाः पाणिपादादिहीनाः[७] । श्रौतस्मार्त्तक्रियानधिकारिणो दायानर्हा इति वक्तुलार्थः । तत्पुत्रास्तु[८] पतितोत्पादितवर्ज्जं तदर्हाः[९] ।

---

१ क + छ + च = तत्सपिण्डाः । २ ग = तेषां तद्धि । ३ ग + छ = ज्ञातृ । ४ च = तु न्याय्यं । ५ च = मनीषिभिः । ६ च = मत्यन्तं । ७ च = रहिताः । ८ च = तत्पुत्रादिस्तु । ९ च = तदर्हः ।

(९९) तथा च याज्ञवल्क्यः—

पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगार्त्तो[1] भर्त्तव्यास्तु निरंशकाः ॥

अचिकित्स्यरोगार्त्तः कुष्ठादिना एते दायानर्हाः[2] ।

(१००) औरसक्षेत्रजास्तेषां[3] निर्दोषा भागहारिणः ।
सुतास्त्वेषां प्रभर्त्तव्या यावद्वै[4] भर्तृसात्कृताः ॥

पतितौरसाः पूर्वोत्पन्ना[5] एव । अन्यौरसा उत्तरजा अपि सुताः पुत्र्यः[6] ।

(१०१) अपुत्रा ये मृताश्चैषां[7] भर्त्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

एषां क्लीवादीनाम् । प्रतिकूला विपादिप्रदाः ॥

(१०२) नारदः-

पितृद्विट् पतितः षण्डो यश्च स्यादुपपातितः[8] ।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ।

पितृद्विट् पितरि जीवति तत्ताडनादिकृत । मृते तु तच्छ्राद्धादिविमुखः ।

(१०३) दीर्घतीव्रामयग्रस्ता जडोन्मत्तान्धपङ्गवः ।
भर्त्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः ॥

दीर्घं यक्ष्मादि । तीव्रं कुष्ठादि । जडो निर्विवेकः ।

(१०४) देवलः—

मृते पितरि न क्लीवकुष्ठ्युन्मत्तजडान्धकाः ।

---

१ च = अचिकित्स्यकुष्ठादिमन्तो दायानर्हाः । २ ग + छ = अचिकित्स्यकुष्ठादिमान्दायानर्हः । ३ च = क्षेत्रजश्चेषां । ४ च = यावन्नो । ५ ग = पूर्वोत्पन्न एव । ६ च = पुत्र्य एतदग्रे भर्तृसात्कृताः परिणीताः । क्लीवादेः पत्नीः प्रत्याह । इत्यधिकः पाठः । एतदग्रे सुताः पित्रा प्रभर्त्तव्या निर्दोषाः साधुवृत्तय इति छ पुस्तके चाधिकः पाठः । ७ ग + घ + च = अपुत्रा योषितश्चैषां । ८ च = औपपातिकः ।

**पतितः पतितापत्यं लिङ्गी दायांशभागिनः ॥**
**तेषां पतितवर्जानां वस्त्रभक्तं[1] प्रदीयते ।**
**तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ॥**

मृत इत्युपलक्षणम् । लिङ्गी अतिशयेन कपटव्रतधारी । दोषो भागानर्हताप्रयोजकः ।

(१०५) **वसिष्ठः—**

**अनंशा आश्रमान्तरगताः ।**

आश्रमान्तरं[2] गार्हस्थ्यात् ।

(१०६) **कात्यायनः-**

**अक्रमोढासुतश्चैव सगोत्राद्यश्च[3] जायते ।**
**प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित् ॥**

(१०७) सवर्णाक्रमेण[4] विवाहः शास्त्रीयस्तदतिक्रमेणोढा[5] अक्रमोढा तथाक्रमोढाया अपि सगोत्रायाः पुत्रस्तथा प्रव्रज्यां गृहीत्वा ततो भ्रष्ट एते भागानर्हा इत्यर्थः ।

(१०८) **अत्राद्ये विशेषमाह स एव—**

**अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ॥**

अक्रमोढासुतोऽपि[6] पितुः सवर्णो भागार्ह इत्यर्थः[7] । (१०९) तदयं संक्षेपः विरुद्धकर्मासक्तः उत्कटदोषेणापपात्रितः पतितः क्लीवस्तथा अप्रतिक्रियं[8] आन्ध्यं बाधिर्यम् । औन्मत्यं जडत्वं[9] मूकत्वं पाणिपादादिहीनत्वं वा येषां ते तथा कुष्ठादिमान् पितृद्विट् राजयक्ष्मी अतिशयेन

---

१ ग + घ + छ = भक्तवस्त्रं । २ छ = वेश । ३ छ = सगोत्रायाश्च । ४ ग + च = प्रक्रमेण । ५ च = तदतिक्रमोढाया अपि सगोत्रायाः । ६ च = सुतः पितुः । ७ ग + छ = भागभागित्यर्थः । ८ छ = प्रतिक्रियं । ९ च = जडत्वे मूकत्वं ।

कपट[1]व्रतधारी आश्रमान्तरगतश्च एते भागा[2]नर्हाः । एतेषां पुत्राः पतितजनितवर्जं भागानर्हता[3]प्रयोजकदोषरहिताः सन्तो भागा[4]र्हा एव ।

— --- —

## अथासंस्कृतसंस्कारः ।

(११०) तत्र व्यासः-

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथावि[5]धि ॥

(१११) नारदः—

अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्कारा भ्रातृ[6]णां पूर्वसंस्कृतैः ॥

(११२) याज्ञवल्क्यः—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥

(११३) मनुः—

स्वेभ्यः स्वेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

(११४) स्वेभ्यो भ्रातृभ्यस्तेन कन्याभ्यः तत्सजातीयभ्रातृभागाच्चतुर्थभागमाकृष्य भ्रातरो दद्युरित्यर्थः । (११५) अत्र चतुर्थभागदानमविवक्षितम् । किन्तु यावता संस्कारो निर्वहति तावद्द्यम्। अनूढानान्तु कन्यानां वित्तानु[7]सारेण संस्कारं कुर्यादिति विष्णुवचनात् । रत्नाक[illegible]म् ।

---

१ छ = वेश । २ छ = भागानर्हः । ३ च + छ = नर्हत्व । ४ च = भागभाज एव । ५ च = विधाः
६ च + छ = भ्रातृभिः । ७ च = स्ववित्तानुरूपेण ।

## अथ विभाज्यम् ।

(११६) तत्र कात्यायनः—

पैतामहञ्च पित्र्यञ्च यत्किञ्चित्स्वयमर्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ।

स्वयमर्जितं पितृद्रव्योपश्लेषेण ।

(११७) नारदः[१] —

[illegible] पितृदायेभ्यो यद्दत्तं[२] पैतृकञ्च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्याद[३]न्यथा पिता ॥

पितृदायः पितृणं । (११८) एवञ्च यत्पित्रा[४] दातुमङ्गीकृतं तत्परिशोध्य पश्चाच्छेषं वण्टनीयमित्यर्थः ।

---

## अथाविभाज्यम् ।

(११९) तत्र मनुः—

विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

मैत्रं मित्रत्व[५]पुरस्कारेण[६] लब्धम् । औद्वाहिकं[७] वक्ष्यते । माधुपर्किकं मधुपर्ककाले पूज्यतया लब्धमर्हणादि ।

(१२०) मनुविष्णू—

अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् ।

---

१ घ = नारद इति नास्ति । २ च = दत्वर्णं पैतृकं ततः । ३ च = ऋणी न स्याद्यथा पिता । ४ ग = पित्रा दातुमङ्गीकृतम् । एवञ्च पित्रर्णं यत्तत् । छ = पितृणं दत्तं पित्रा दातुमङ्गीकृतं एवञ्च पितृणं परिशोध्य । च = परिशोध्य पित्रर्णं यत्तत्परिशोध्य । ५ छ = मित्रपुरस्कारेण । ६ च = यल्लब्धम् । ७ घ = चाग्रे वक्ष्यते ।

**स्वयमीहितलब्धञ्च नाकामो दातुमर्हति ॥**

श्रमः सेवादिः । ईहितं कृष्यादि । (१२१)उपलक्षणञ्चैतत् । साधारणधना[१]नुपश्लेषेणार्जितमर्जकस्यासाधारणम्भवतीत्यर्थः ।

(१२२) **व्यासः—**

**पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।**
**तस्य तन्नापहर्त्तव्यं मात्रा दत्तश्च यद्भवेत् ॥**

(१२३) तथा—

**अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।**
**दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥**

(१२४) अनुपश्लेषार्जितं च विद्यार्जितं[२] च द्वयमप्यविभाज्यमित्यर्थः[३] । (१२५) विद्ययापि साधारणधनानुपश्लेषेण यदर्जितं तदेवाविभाज्यमिति तु **प्रकाशः**[४] । तन्न । उभयोपादानानर्थक्यापत्तेः । **रत्नाकरादयो-प्येवम् ।**

(१२६) **ननु**

**वैद्योऽविद्याय नाऽकामो दद्यादंशं स्वतो धनात् ।**
**पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम्[५] ॥**

इति **नारद**वचनेन[६] पितृद्रव्योपश्लेषेण विद्ययाप्यर्जितं विभाज्यमेवेत्यव-सीयत इति चेत् । सत्यम् । किन्तु यत्र विद्यार्जनेपि धनार्जनवत् साधारणधनोपश्लेषः[७] तद्विषयं[८] हि तत् । (१२७) अत एव विद्यार्जने[९] तदनुपश्लेषे सति धनार्जने तदुपश्लेषानुपश्लेषावपुरस्कृत्यैवाविभाज्य-त्वमाह ।

(१२८) **कात्यायनः—**

**परभक्तप्रदानेन[१०] प्राप्तविद्यो यदान्यतः[११] ।**

---

१ छ = साधारणानुपश्लेषेण । २ छ = विद्यालब्धञ्च । ३ छ = द्वयमभाज्य । ४ च = प्रकाशकारः । ५ छ = कृतम् । ६ च = वचनेनापि । ७ च = साधारणोपश्लेषः । ८ च = तद्विषयम् । अतएव तदनुपश्लेषेण विद्यार्जने सति धनार्जने साधारणानुपश्लेषोपश्लेषावपुरस्कृत्यैवाविभाज्य-माह कात्यायनः । ९ छ = विद्यार्जनेपि साधारणधनानुपश्लेषं पुरस्कृत्यैव । १० छ = प्रसादेन । ११ छ = यदन्यतः ।

तथा प्राप्तन्तु[1] यद्वित्तं विद्याप्राप्तं तदुच्यते ॥

अन्यतः[2] स्वदायादभिन्नात् ।

(१२९) तदुक्तमनेनैव ।

कुले विनीतविद्यानां भ्रातृतः[3] पितृतोऽपि[4] वा ।

शौर्यप्राप्तं च[5] यद्वित्तं तद्विभाज्यं बृहस्पतिः ॥

(१३०) विद्यात्र[6] शस्त्रशास्त्रयोः । तेन पित्रादितः स्वदायादाच्छस्त्रं शास्त्रं वा अधीत्य तेन यदर्जयति तत्र भ्रात्रन्तराणामपि भाग इत्यर्थः ।

(१३१) उपन्यस्ते तु[7] यल्लब्धं विद्यया पणपूर्वकम् ।

विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥

शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् ।

स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च[8] यत् ॥

विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।

शिल्पेष्वपि हि धर्मोयं मूल्याद्यच्चाधिकं भवेत् ॥

आर्त्विज्यतः वरणभरणादितः[9] । प्रश्नात्स्वकृतात्[10] कृतप्रश्नस्य च निर्णयात् शास्त्रार्थसम्मोहे[11] स्वज्ञानशंसनात् प्राध्ययनात् बहुविद्यत्वात् शिल्पार्जितमपि विद्यार्जितवत् । (१३२) अल्पमूल्येनैव यत्[12] गुरुद्रव्यं विक्रेत्रा क्रेतरि पुरुषेऽविद्यया दत्तं तत्राप्यधिकभागः क्रेतुरसाधारणः अहमेवेमां[13] विद्यां वेद्मीत्यादि विद्याप्रतिज्ञा ।

(१३३) कात्यायनः[14]—

नाविद्यानां तु वैद्येन देयं विद्याधनात्[15] क्वचित् ।

स्वसमाधिकविद्यानां[16] देयं वैद्येन तद्धनम् ॥

---

१ च=तया लब्धधनं यत्तु । २ छ=नास्ति अन्यत इत्यारभ्य भिन्नादित्यन्तः पाठः । ३ च=भ्रातृभिः पितृतस्तथा । ४ छ=पितृतस्तथा । ५ छ=तु । ६ छ=विद्या शस्त्रशास्त्रयोः । ७ च=षु । ८ छ=प्राध्ययनात्तु । ९ छ=करणादितः । १० छ=कृतप्रश्नस्य निर्णयात् प्राध्ययनात् । ११ छ=शास्त्रार्थसम्मोहे स्वज्ञानशंसनादिति नास्ति । च=सन्देहे । १२ छ=यद्द्रव्यं विक्रेत्रा विक्रेतरि पुरुषे दत्तं तत्राधिकभागः । १३ च=एनां । छ=इत्यादिविधा प्रतिज्ञा । १४ कात्यायन इत्यारभ्य किन्तु तदर्जितमिश्रणमित्यन्तः पाठः छ पुस्तके नास्ति । १५ च=धनं । १६ च=समविद्याधिकानान्तु ।

(१३४) अत्र स्वसमविद्यत्वमधिकविद्यत्वं वा न दानप्रयोजकं वाक्यस्यादृष्टार्थतापत्तेः। किन्तु तदर्जितमिश्रणम्।

(१३५) कात्यायनः—

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः।
भागं विद्याधनात्तस्मात् स लभेताऽश्रुतोऽपि सन्॥

(१३६) तदयं संक्षेपः। परपिण्डोपजीवनेन परतोऽधीतेन शस्त्रेण शास्त्रेण वा विद्योपादानकाले[1] दायादैर्पुष्यमाणकुटुम्बकेन[2] साधारणं धनमाश्रित्यापि यदर्जितं[3] तद्विद्यार्जितमविभाज्यम्।

(१३७) यादृशं शौर्यधनमविभाज्यं तदाहायमेव[4]—

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः॥
तत्र लब्धं च यत्किञ्चिद्धनं शौर्येण तद्भवेत्।
ध्वजाहृतं भवेद्यत्तु[5] विभाज्यं नैव तत्स्मृतम्॥
संग्रामादाहृतं यत्तु विद्राव्य[6] द्विषतां बलम्।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते॥

(१३८) यादृशमौद्वाहिकमसाधारणं तदाहायमेव[7]—

यल्लब्धं लाभकाले तु स्वजात्या कन्यया सह।
कन्यागतन्तु तद्वित्तं[8] शुद्धं वृद्धिकरं स्मृतम्॥
वैवाहिकन्तु तद्विद्याद्भार्यया यत्सहागतः[9]।
धनमेवं विधं सर्वं विज्ञेयं धर्मसाधकम्[10]॥

---

१ छ = विद्योपार्जनकाले। २ च = अपोष्यमाण। ३ च = यद्धनमर्जितम्। ४ च = स एव। छ = तदाह मनुः। ५ च = भवेद्। ६ विजित्य। ७ च = स एव। ८ च = एतद्वित्तिकरं परम्। छ = शुद्धं वृत्तिकरं स्मृतम्। ९ छ = तत्सहागतम्। १० छ = साधनम्।

## अथ भाग[illegible]ना ।

(१३९) तत्र मनुः—

**अविद्यानान्तु सर्वेषामीहा[illegible] भवेत् ।**
**समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥**

ईहा कृष्यादिः । समोऽविषमः । अपित्र्ये[1] तेन विंशोद्धारादिरपि नात्रास्ति ।

(१४०) **स्वयमर्जितमित्यनुवृत्तौ गोतमः[2]—**

**अविद्याः[3] समं विभजेरन् ।**

(१४१) **वसिष्ठः—**

**येन चैषां [illegible] स्यात् तद्द्व्यंशमाहरे[4][illegible] ।**

(१४२) यदा बहूनां भ्रातॄणां मध्ये साधारणधनमाश्रित्यैक एव कृष्यादिना-र्जयति तदा तस्य द्वावंशौ शेषाणामेकैकः[5] ।

(१४३) **व्यासः—**

**साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्[6] ।**
**शौर्य[illegible]दिनाऽऽप्नोति धनं भ्रातरस्तस्य भागिनः[7] ॥**
**तस्य भागद्वयं कार्यं[8] शेषास्तु समभागिनः ।**

(१४४) आदिपदस्य प्रकारवाचितया बहुव्रीहेश्चास्य तद्गुणसंविज्ञानतया असाधारणोपायविद्यापरिग्रहः[9] । (१४५) ननु[10] साधारणधनाश्रयेणापि[11] विद्याशौर्यादिना यदर्जितं न[12] तद्विभाज्यमिति प्रागुक्तमनेन[13] विरुद्ध्येथ तेतिचेन्न तस्य **कात्यायन**[14] परिभाषितविद्याशौर्यादि[15]परत्वादस्य तु तदित-रप्रकारक[16]विद्योपष्टम्भमात्रपरत्वात् ।

---

१छ = अपित्र्य इति । २ च = गौतमः । ३ छ = समं भजेरन् । ४ च = स द्व्यंशमाहरेत । छ = स द्व्यंशमाहरेत् । ५ छ = एकैकांशः । ६ ख = वाहनादिकम् । ७ ग + + च + छ = तत्र भागिनः । ८ छ = देयं । ९ च = असाधारण्योपाय । १० च + ङ + ख = मन्वसाधारण । ११ छ = धनाश्रयणेनापि । १२ ग + छ = तदविभाज्य । १३ च = क्रमेण । १४ छ + ङ = कात्यायनादि । १५ छ = विद्यादि । १६ छ = प्रकार ।

अथ स्त्रीधनविभागे प्रस्तोतव्ये प्रथमं तावत् स्त्रीधनलक्षणमेवोच्यते ।

(१४६) तत् प्रपञ्चे तु मनुकात्यायनौ—

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतितः स्त्रियै ।
मातृभ्रातृपितृप्रत्तं[1] षड्विधं स्त्रीधनं स्मृतम् ।

षड्विधमिति न्यूनव्यवच्छेदपरम् ।

(१४७) अत्राद्यत्रयमाह[2] कात्यायनः—

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् ॥

दीयते येन केनापि संकोचकाभावात् ।

(१४८) तथा—

यत्पुनर्लभते नारी नीयमाना हि पैतृकात् ॥
अध्यावाहनिकं नाम स्त्रीधनं स[मु]दाहृतम् ।

द्विरागमनकाले[3] यत्कुतोपि प्राप्तं तदध्यावाहनिकमित्यर्थः ।

(१४९) तथा—

प्रीत्या[4] प्रदत्तं यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितम[ु]च्यते ॥

लावण्यं शीलनैपुण्यादि । (१५०) तथा च पादप्रणतायै शीलादिमत्यै वा स्त्रियै श्वशुरादिना यद्दत्तं तत्तृतीयं[5] स्त्रीधनमित्यर्थः । मात्रादिदत्तन्तु[6] त्रितयं व्यक्तमेव ।

(१५१) आधिवेदनिकं सप्तमम् ।

तदाह[7] याज्ञवल्क्यः—

आधिविन्न[8]स्त्रियै दद्यादाधिवे[द]निकं सम[9]म् ।

---

१ च = प्राप्तं । २ ङ = तत्राद्यत्रय । च = तत्र त्रिविधे कात्यायनः । ३ ग = काले तु । च = यत्कुतोप्यवाप्तं । ४ च + छ = प्रीत्या दत्तं तु । ५ छ = तृतीयं । ६ ङ = दत्तत्रितयं । च = दत्तन्तु त्रयं । ७ छ = यदाह । ८ छ = अधि । ९ घ = परम् ।

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥

(१५२) द्वितीयेन पत्युर्विवाहेन[1] प्रथमभार्या आधिविन्ना[2] भवति तस्यै पत्या अधिवेदनकाले यद्दत्तं तदाधिवेदनिकम् ।

(१५३) विष्णुः[3]—

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपाहृतम्[4] ।
आधिवेदनिकं शुल्कमन्वाधेयमिति[5] स्थितिः ॥

अत्राद्यानि षडुक्तानि ।

(१५४) शुल्के कात्यायनः—

गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम्[6] ।
मूल्यं लब्धन्तु[7] यत्किञ्चिच्छुल्कं[8] तत्परिकीर्त्तितम् ॥

(१५५) गृहोपस्करादिकरणोपाधिना स्त्रिया गृहपतितो यल्लब्धं तच्छुल्कमित्यर्थः ।

(१५६) तथा—

विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥

(१५७) एवं दश[9] स्त्रीधनानि भवन्ति । एतदेव स्त्रीणां सौदायिकम् ।

(१५८) तदाह[10] कात्यायनः—

ऊढया कन्यया वापि[11] पत्युः पितृगृहेऽथवा[12] ।
भ्रातुः[13] सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

पत्युरित्यत्रापि गृह इति सम्बन्धः । सार्धमित्यपपाठः । भ्रातुरित्युपलक्षणम् ।
(१५९) तेन कन्यया वा ऊढया वा पितृतो वा तत्कुलतो[14] वा यल्लब्धं तत्सर्वं तस्याः सौदायिकमित्यर्थः ।

---

१ च-भर्तुर्विवाहेन । २ च=अधिविन्ना । ३ छ=विष्णुस्तु । ४ च+छ=उपागतम् । ५ च=अन्वाधेयकमिति स्त्रीधनलक्षणम् । ६ च=कर्मिणाम् । ७ च=मूल्यं लब्धञ्च । ८ छ=तच्छुल्कं परि । ९ च=एवं स्त्रीधनानि । १० च=तथा च कात्यायनः । ११ ग=सर्वं । १२ घ=गृहेऽपिवा । च=पितृगृहे तथा । १३ छ=प्रास सकाशात् । १४ ख=कुलतो वा । छ=तत्कुलतोपि वा यल्लब्धं तत्सर्वं सौदायिक ।

वक्ष्यमाणं वृत्त्यादिकमप्येतत्प्रपञ्चनम्[१] ।

(१६०) तद्विनियोगमाह स एव—

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितः ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

(१६१) [२]नाभिकुललब्धे स्थावरेऽपि यथेष्टं स्त्रिया दानादौ स्वातन्त्र्यमित्यर्थः ।

(१६२) सौदायिके आपस्तम्बः—

अलङ्कारो भार्याया ज्ञातिधनञ्चेत्येके ।

भार्यायाः स्वमिति शेषः । ज्ञातिधनं विवाहादौ लब्धं[३] पितृकुलात् पति-कुलाद्वा ।

(१६३) अलङ्कारे मनुविष्णू—

पत्यौ जीवति यः कश्चिदलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥

(१६४) [४]पत्युरनुज्ञया परिधृतोऽलङ्कारस्तावतैव भार्याया भवतीति मेधातिथिः । [५]अस्मिंश्च स्थावरे जङ्गमे[६] च[७] दानविक्रययोः स्त्रीणां स्वातन्त्र्यं पूर्वलिखित[८]कात्यायनवचनात् ।

(१६५) नारदः—

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत् ।

---

१ छ=प्रपञ्चः । च=वक्ष्यमाणवृत्यादिकमप्येतत्प्रपञ्चनम् । २ च=पतिकुलदत्तस्थावरेष्वपि स्त्रिया दानादौ स्वातन्त्र्यमित्यर्थः । ३ च=ज्ञातिलब्धम् । ४ ग+घ+च+छ=[illegible]रवत्तोपि तदनुज्ञया परिहितोऽप्यलङ्कारस्तावतैव भार्यायाः स्वोभवतीति मेधातिथिः । ५ च=तस्मिंश्च । ६ च=स्थावरे जङ्गमे च पतिकुललब्धे । छ=स्थावरे जङ्गमे च । ७ च=[illegible]लब्धे । ८ ग+च=स्वरसात् ।

**सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥**

(१६६) एवंच[1] भर्तृदत्ते जङ्गमे परं स्त्रिया दानादौ स्वातन्त्र्यं न तु स्थावरेऽपीति। एवं सौदायिके व्यवस्था सिद्धा।

(१६७) कात्यायनः[2]—

**भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः।**
**विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा ॥**
**अपुत्रा शयनं भर्तुः पालयन्ती व्रते[3] स्थिता।**
**भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः ॥**

(१६८) भर्तृदायो भर्तुर्धनम्[4]। तच्च तस्मिन्नसति[5] ग्राहकान्तराभावात् स्त्रीस्वत्वास्पदीभूतं[6] च तस्मिन्[7] सति तु तदनिषेधादिना[8]।

**तत्राद्य आह[9]। भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टत** इति। इदन्तु स्थावरेतरपरम्। (१६९) स्थावरे त्वाह। **भुञ्जीताऽऽमरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः**। क्षान्ता अनतिव्ययिनी। **अपुत्रेत्यादि** तदधिकारप्रयोजकं विशेषणम्। (१७०) द्वितीयेत्वाह **विद्यमाने तु संरक्षेत्** इति। सति पत्यौ तद्धनं रक्षेदित्यर्थः। अन्यथेति। पतिधना भावपक्षे विधवा पतिकुल एव कालं नयेदित्यर्थः। (१७१) एवञ्च मृतस्य पत्युः स्थावरे भार्यासंक्रान्तेपि न तस्यास्तद्दानादौ[10] स्वातन्त्र्यमाकाङ्क्षातौल्यात्[11]। अन्यथा तत्र कीदृशी व्यवस्थेत्याकांक्षाऽपूर्णैव तिष्ठेत्। अत एवास्य[12] वचनस्य सौदायिकप्रकरणाम्नानविरोधोप्यपास्तः। प्रकरणापेक्षया आकां-

---

१ ग = अत्र स्थावरे परं स्त्रिया दानादौ स्वातन्त्र्याभावः। २ छ = अत्र कात्यायनः। ३ ग + छ = गुरौ स्थिता। ४ छ = भर्तृधनम्। ५ ग = तस्मिन्सति। ६ ख + ग = स्वत्वास्पदीभूतं तस्मिन्। ७ छ = यस्मिन्सति तदनुज्ञया स्त्रीस्वत्वास्पदीभूतञ्च तत्राद्य आह। ८ घ = तदनुज्ञया स्त्रीस्वत्वास्पदीभूतञ्च। ९ ग + छ = मृते पत्यौ। १० घ = न तस्या दानादौ। ११ छ = अधिकार स्तौल्यात्। १२ छ = अत एव चास्य वचनस्य।

क्षाया बलवत्वात्। यथा पतिदत्ते[1] स्थावरे वचनाद्दानादौ स्त्रीणामनधिकारस्तथा पत्युः स्थावरेऽपि स्वसंक्रान्ते[2] । एवमेव **प्रकाशरत्नाकरौ** । एवं पुत्रद्वारा[3] स्त्रीसंक्रान्तेपि[4] पतिस्थावरे तत्राप्याकांक्षा[5]सत्वात् साक्षात्त्वस्य[6] चाश्रुतेः[7] ।

(१७२) प्रकृते[8] तु देवलः—

**वृत्तिराभरणं शुल्कं लाभश्च[9] स्त्रीधनं भवेत् ।**
**भोक्त्री[10] च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥**

वृत्तिः वृत्त्यर्थं दत्तधनम्[11]। आभरणमलङ्कारः। शुल्कं विवाहार्थितया कन्यायै दत्तम् । लाभो बन्धुभ्यो लब्धम्। एतत्सर्वं स्त्रीधनम्।

(१७३) तथा—

**वृथा दाने च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।**
**पुत्रार्त्तिहरणे चैव[12] स्त्रीधनं भोक्तुमर्हति ॥**

(१७४) स्त्रीणामननुमत्या तद्धनस्य[13] दानभोगौ न कार्यौ पुत्रप्रतीकारार्थं तु कार्यावेवेत्यर्थः ।

(१७५) **तदनुमत्या त्वनापद्यपि तद्ग्राह्यमित्याह स एव—**

**तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।**
**मूलमेव स दाप्यः स्याद्यदा स धनवान्भवेत्[14] ॥**

(१७६) तथा—

**व्याधितं व्यसनस्थं च धनिकैश्चोपपीडितम् ।**

---

१ छ=स्थावरे एतद्वचनाद्दानादौ । २ छ=स्त्रीसंक्रान्ते । ३ छ =पुत्रादिद्वारा । ४ च=संक्रान्तेपि स्थावरे । ५ छ+ग+ङ=अत्राप्याकांक्षा । ६ च=साक्षाद्वचनस्य । ७ ग=चाश्रुतेरिति वर्त्तुलार्थः । ८ ग=स्थावरत्वे स्वातन्त्र्यं दर्शयितुमिदमिदानीमुक्तं प्रकृते । ९ च=लाभश्च स्त्रीधनं लभते । १० च=भोक्त्री तत्स्वयमेवेदं । ११ च+छ=धनं दत्तम् । १२ च+छ=चापि । १३ ग+च+छ=वृथा दान । १४ छ=धनभारभवेत् ।

ज्ञात्वा निसृष्टं यत्प्रीत्या[1] दद्यादात्मेच्छया हि सः[2] ॥

(१७७) व्याध्यादिग्रस्तं पत्यादिकमवेक्ष्य[3] स्त्रिया स्वधनं यत्प्रयुक्तं तत्स्वेच्छया पत्यादिर्दद्यादित्यर्थः ।

(१७८) याज्ञवल्क्यः—

दुर्भिक्षे धर्मकार्ये च व्याधौ च प्रतिरोधके[4] ।
गृहीतं स्त्रीधनं भर्त्ता[5] न स्त्रियै दातुमर्हति ॥

(१७९) प्रतिरोधक इति[6] व्याधिविशेषणम् । कार्यानुष्ठानबाधक इति[7] तदर्थः । तथा चावश्यकधर्मानुष्ठानस्य[8] प्रकारान्तरेण कर्त्तुमशंकितस्य[9] निर्वाहार्थं पत्या यद्भार्यायाः स्त्रीधनं गृहीतं तन्न देयमित्यर्थः[10] ।

(१८०) अस्यापवादमाह कात्यायनः—

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि यत्प्रतिदाप्यः स तद्बलात् ॥
ग्रासाऽऽच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं ऋक्थिनस्तथा[11] ॥
लिखितस्येति धर्मोऽयं प्राप्ते भर्तृकुले वसेत्[12] ।
व्याधिता प्रेतकाले तु गच्छेद्बन्धुजनन्ततः ॥
अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता[13] या च स्त्रीधनं नार्हति[14] ॥

---

१ च + छ = सम्प्रीत्या । २ च = दद्याद्वा स्वेच्छया हि सः । ३ च = पत्यादिकं दृष्ट्वा । छ = पत्यादिकमवेत्य स्त्रिया यत्स्वधनं प्रयुक्तं । ४ च + छ = सम्प्रतिरोधके । ५ च = भर्त्ता । ६ च = सम्प्रतिरोधक इति । ७ छ = बाधक इत्यर्थ । ८ ग + ङ = कर्मानुष्ठानस्य । छ + ख = धर्म्माद्य-नुष्ठानस्य । ९ च = मशक्तस्य । १० छ + ङ = तन्नाकामेन देयमित्यर्थः । ११ च = विभागमृक्थिनान्तथा । १२ क = कुलम् । १३ च = वती । १४ ग + छ = स्त्रीधनं न तु सार्हति । च = स्त्रीधनं न च सार्हति ।

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।
तिष्ठेद्भर्तृकुले सा तु न सा पितृकुले वसेत् ॥

(१८१) भजत इत्यादि । यदि ऋतावपि पतिस्तां न भजते यदि वा ग्रासं वासं वस्त्रं न ददाति तदा तस्मै व्याध्यादिनिस्तारार्थमपि स्त्रिया दत्तं स्वधनं बलादपि ग्राह्यमित्यर्थः । (१८२) प्राप्त इत्यादि । तस्मिन्धने प्राप्तेपि सा भर्तृकुल एव वसेन्न तु पितृकुलं यायादित्यर्थः (१८३) अपकारे त्यादि । एतादृश्याः स्त्रीधनमप्याच्छिद्य बान्धवैर्ग्राह्यमित्यर्थः । भर्त्रेति सुगमम् ।

---

## अथ स्त्रीधनविभागः ।

(१८४) तत्र मनुः—

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥
यास्तासां स्युर्दुहितरस्तासामपि यथांशतः ।
मातामह्या धनात्किञ्चित् प्रदेयं प्रीतिपूर्वकम् ॥

सममविषमांशम् । सनाभयः सहोदराः । भगिन्यश्च कुमार्य एव समांशाः ।

(१८५) तदाह बृहस्पतिः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

अपत्यानां पुत्राणां तदंशिनी पुत्रसमांशिनी विशेषश्रुत्या समत्वलाभात् । समूढा विवाहिता । मानमात्रकं द्रव्यानुसारेण किञ्चित् ।

---

१ ग + ख + ङ = या तु न या पितृकुले वसेत् । च = या तु न सा । २ च = ग्रासाच्छादनानि । ३ च = ऋणे । च = प्राप्ते ४ च = सुकरम् । ५ ग + च + छ + ङ = सममविषमम् । ६ च + छ = तदंशिनीतिविशेषाश्रुत्या समत्वलाभः ।

(१८६) **गोतमः—**

**स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च ।**

अप्रतिष्ठिता[1] अनपत्या । निर्द्धनभर्तृका दुर्भगा चेति **रत्नाकरादयः ।**
एता[2] अपि पुत्रवत् मातृधने[3] भागभाजः ।

(१८७) **मनुः—**

**मातुस्तु यौतुकं यत्स्यात्कुमारीभाग एव सः ।**

यौतुकं विवाहादिकाले[4] पित्रादितो लब्धम् ।

(१८८) **वसिष्ठः—**

**मातुः पारिणाय्यं[5] स्त्रियो विभजेरन् ।**

पारिणाय्यं[6] परिच्छदादर्शकङ्कतादि[7] ।

(१८९) **याज्ञवल्क्यः—**

**मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ।**

(१९०) मातुर्द्धनं तदृणाच्छेषं तदृणपरिशोधनशेषं[8] दुहितरो भजेरन् । ताभ्य ऋते दुहितॄणामभावेऽन्वयः । दौहित्रदौहित्र्यौ **मनुवचना-**नुरोधात् । (१९१) ब्राह्मादिवैवाहिकं परिच्छदादिकं च यन्मातुर्द्धनं तद्विषयमेतत् ।

(१९२) **कात्यायनः—**

**दुहितॄणामभावे तु ऋक्थं पुत्रेषु तद्भवेत् ।**
**बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥**
**भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्तृकाः ।**
**स्त्रीधनस्येति धर्मोयं विभागस्तु प्रकीर्तितः ॥**

---

१ ग + ङ = अपुत्रा अप्रतिष्ठिता । २ च = एता अपुत्रा अपि पुत्रवन्मातृधनभाजः । ३ ङ = मातृभागभाज । ४ ङ + छ + ग + ख = विवाहकाले । ५ ङ + छ = परिणाय्यं । ६ ग = परिणाय्यं । छ = परिणाज्यं । ७ च = छ + कङ्कतिकादि । ८ च = शोधनावशेषं ।

(१९३) दुहितॄणामिति। पारिणाय्यं[1] ब्राह्मादिविवाहकाले यौतुकञ्च[2] पितृदत्तञ्च यन्मातुर्धनं तत्तस्याः पुत्र्यभावे पुत्रगामि भवतीत्यर्थः। एतदतिरिक्तं[3] तु स्त्रिया धनम्। तस्या अभावे[4] पुत्रीपुत्रोभयगामीत्युक्तमेव प्राक्। बन्धुदत्तमिति। पित्रतिरिक्तेन यद्दत्तं[5] तद्भ्रातृभगिन्योः[6] कन्या[7] तत्र[8] समांशा विवाहिता तु किञ्चिद्भागभागिति भगिन्य[9] इत्यादेरर्थः अभावे[10] पुत्री पुत्राद्यभावे स्त्रीधनं[11] पतिगामीत्यर्थः।

(१९४) **मनुः—**

**ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्।**
**अतीतायामप्रजसि[12] भर्त्तुरेव तदिष्यते॥**
**यत्त्वस्याः स्याद्धनं दत्तं[13] विवाहेष्वासुरादिषु।**
**अतीतायामप्रजसि[14] मातापित्रोस्तदिष्यते॥**

अप्रजसि[15] अनपत्यायाम्।

(१९५) **गोतमः—**

**भगिनीशुल्कं सोदर्याणामूर्द्ध्वं मातुः पूर्वञ्चेत्येके।**

आसुरादिविवाहत्रयलब्धविषयमेतत्[16]।

(१९६) **बौधायनः—**

**ऋक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्।**
**तदभावे भवेन्मातुस्तदभावे पितुर्भवेत्[17]॥**

---

१ च = पारिणाय्यं विवाहकाले यौतुकलब्धं। छ - परिणाय्यं। २ ङ - यौतुकलब्धं यन्मातुर्धनं। छ = पितृदत्तं यौतुकं च यत्। ३ च - तदतिरिक्तन्तु स्त्रीधनम्। ४ ङ - तस्याभावे। ५ च = दत्तं यत्तद्भ्रातृभगिन्योः किन्तु कन्या तत्समांशा। ६ छ = यत्तद्भ्रातृभगिन्योः। ७ ग + च + छ = किन्तु। ८ ङ - किन्तु। ९ च - भागिनीति। १० ग - पुत्रपुत्र्याद्यभावे। ११ च + छ = स्त्रिया धनं। १२ च = अप्रजायां। १३ च + छ किञ्चित्। १४ प - अप्रजायाम्। १५ च = अप्रजायामनपत्यायाम्। १६ ग + घ + च + छ - विवाहे तु। १७ भवेत्पितुः।

## अथ गुप्तप्राप्तविभागः ।

(१९७) तत्र याज्ञवल्क्यः—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्र दृश्यते ।

तत्पुनस्तत्[१]समैरंशैर्विभजेरन्निति स्थितिः ॥

(१९८) अत्राऽविभक्तत्वादेव विभागे प्राप्ते वचनारम्भोऽत्र चौर्यदोषाऽभावं ज्ञापयतीति हलायुधः ।

(१९९) कात्यायनः—

अन्योन्यापहृतं द्रव्यं दुर्विभक्तं[२] च यद्भवेत् ।

पश्चात्प्राप्तं[३] च विभजेत् समभागेन तद्भृगुः ॥

बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् ।

समभागेन पूर्वसम[४]भागेन । भोगं गुप्तसाधारणधनभोगं भोक्ता न दाप्य इत्यर्थः ।

---

## अथ वर्णसमवायविभागः ।

(२००) तत्र मनुः—

चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।

वैश्यासुतो[५] हरेद्द्व्यंशमंशं शूद्रासुतो हरेत् ॥

(२०१) भारते—

अष्टधा तु धनं कार्यं क्षत्रियस्य युधिष्ठिर ।

---

१ च + छ = तत्पुनस्ते समैरंशै । छ = श्च समै । २ छ = निर्विभक्तञ्च । ३ छ = प्राप्तं विभज्येत । ४ च = पूर्वोक्तसमभागेन । ५ च = वैश्यापुत्रोंऽशमेक । छ — वैश्यासुतो द्रव्यंशमेक ।

क्षत्रियाया हरेत्पुत्रश्चतुरोंऽशानपितुर्द्धनात् ॥
युद्धाभिचारिकं यच्च पितुरासीद्धरेच्च यत्[1][2] ।
वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रापुत्रस्तथाष्टमम् ॥
एकैव[3] हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततस्तथा[4] ॥

(२०२) तथा—

पञ्चधा तु धनं कार्यं वैश्यस्य भरतर्षभ ।
वैश्यापुत्रेण हर्त्तव्याश्चत्वारोंशाः पितुर्द्धनात् ॥
पञ्चमस्तु भवेद्भागः शूद्रापुत्रस्य भारत ।

(२०३) ब्राह्मणस्य चतुर्भार्यत्वे क्षत्रियस्य त्रिभार्यत्वे वैश्यस्य द्विभार्यत्वे इयं व्यवस्था। यदि तु नैवं तदा[5] या भार्या नाभूत्तत्पुत्रोचितो भागो दशसु अष्टसु पञ्चसु च न कार्यः। युद्धाभिचारिकमश्वखड्गादि ।

(२०४) तदाह विष्णुः—

अथ चेच्छूद्रापुत्रवर्जं ब्राह्मणस्य पुत्रास्तदा नवधा धनं विभजेयुः ।

क्षत्रियादावप्येवम् ।

(२०५) बृहस्पतिः—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय[6] वै ।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥

(२०६) वृद्धमनुः—

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।

---

१ छ – पितुरंशाद्धरेच्च तत् । २ च = तत् । ३ छ = एकैव तु । ४ छ = न तु दृष्टा ततः स्मृता ।
५ छ = यदि तु नैवं भार्याभूत्तदा तत्पुत्रोचितो भागो । ६ च = क्षत्रियायाः ।

गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥

ब्रह्मदायागतां याजनाध्यापनप्रतिग्रहलब्धाम् । द्विजातयस्त्रैवर्णिकाः ।

(२०७) शङ्खः—

शूद्रापुत्रोऽर्थभागी[1] यदेवास्य पिता दद्यात् । स एव भागस्तस्य गोमिथुनं चापरं दद्यात् । कृष्णायसं कृष्णधान्यं तिलवर्जम् ।

(२०८) मनुः—

यद्यपि स्यात्सपुत्रो[2] वा यद्यपुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ।
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत् ॥

सपुत्रस्त्रैवर्णिकविद्यमानानुरूपपुत्रः[3] । अपुत्रस्तद्रहितः । न रिक्थभाक् पित्रनुग्रहेऽपि न दशमांशाधिक[4]रिक्थभागिति कल्पतरुः । अत्यन्तनिर्गुण[5] ऊढशूद्रापुत्रोऽपि न पितृरिक्थभागभागिति[6] पारिजातः ।

(२०९) बृहस्पतिः—

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः ॥

अनपत्यस्य पितुस्त्रैवर्णिकपुत्रशून्यस्य । सपिण्डाः सन्निहितास्तदभावे व्यवहिता अपि । इदं[7] चानूढशूद्रापुत्रपरमपरिगृहीता स्त्रीत्यधिकारात्[8] ।

(२१०) मनुः—

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।

---

१ च = शूद्रापुत्रोऽभागी यदेवास्य । २ छ = यद्यपि स्यात्तु सत्पुत्रो । ३ छ = सत्पुत्रो विद्यमानत्रैवर्णिकरूपपुत्रः । च + छ = सपुत्रो विद्यमानत्रैवर्णिकरूपपुत्रः । ४ च + छ = यद्यपि-स्यात्सपुत्रो । ५ च = सगुण । ६ च = रिक्थभागिति । ७ च = इदं चानूढा । ८ ग = स्त्रीत्यधि-कारात् ।

सोऽनुज्ञातो हरेदंशमिति धर्म्मो व्यवस्थितः ॥

(२११) याज्ञवल्क्यः—

जातोपि दास्यां शूद्रेण कामतोंशहरो भवेत्।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिकम्[1] ॥

(२१२) शूद्रस्यानूढशूद्रापुत्रः पितुरिच्छया भागं लभेत[2] । तदसत्वेपि[3] स ऊढापुत्रस्य भागापेक्षयाऽर्द्धभागभागित्यर्थः[4] ।

(२१३) तथा—

अभ्रातृको हरेत्सर्वं दुहितॄणां सुताहते ।
शूद्रस्योढापुत्रदौहित्रयोरभावे सकलमेव धनमनूढापुत्रो हरेदित्यर्थः ।

(२१४) गोतमः—

शूद्रापुत्रवत् प्रतिलोमासु ।
शूद्रादिना वैश्यादिजातिषु[5] स्त्रीषु जनित शूद्रापुत्रवज्जीविकामूलं हलफालादि[6] किञ्चिल्लभत इत्यर्थः ।

---

## अथ विभक्तजविभागः ।

(२१५) स च[7] विभक्तजो द्विविधः । विभागकाले गर्भस्थस्तदनन्तरञ्च ।

(२१६) तत्राद्ये याज्ञवल्क्यः—

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥

१ छ भागिनम् । २ च । छ=लभते । ३ च=तदसत्वे तु ऊढापुत्रस्य वैमात्रेयस्य घ - ऊढापुत्रस्य सवैमात्रेयस्य । ४ ख+ग+छ=स्ववैमात्रेयस्य । ५ छ = वैश्यादिषु स्त्रीषु । ६ च=कद्दालादि । ७ च = तदनन्तरं च जातः ।

विभागभाग्भागार्हो[1] भवतीत्यर्थः। दृश्याद्वेति। दृश्यमात्राद् दृश्यादृश्योभयरूपाद्वा धनात्तैर्भागे प्राप्ताद्[2] आयेन उत्तरोपचयेन व्ययेन उत्तरापचयेन विशोधितात्। तेन व्ययितशेषादुदीच्यवृद्धिरहितात्[3][4] भागप्राप्तधनात्[5] स भागं लभत इत्यर्थः। विकल्पश्चायं सगुणनिर्गुणविषय इति हलायुधः।

(२१७) विष्णुः—

**पितृविभक्ता[6] विभागानन्तरोत्पन्नस्य[7] भागं दद्युः।**

अस्यापि पूर्ववदर्थः।

(२१८) द्वितीये मनुः—

**ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत्।**
**संसृष्टास्तेन ये वा स्युर्विभजेत स तैः सह॥**

(२१९) यथा भ्रात्रंशाद्गर्भस्थः प्राप्नोति तथा नायं प्राप्नोतीत्येवकारेण द्योत्यते। किन्तु पितृधनमेव लभते[8]। (२२०) अत्रापि विशेषः। यदि जीवत्येव पितरि तद्भागाद्ग्रहीतुमिच्छति[9] पितापि[10] च भागाकांक्ष्येव तदा पितृभागे पितुर्विभक्तजस्य चांशौ कार्यौ। पितरि प्रमीते[11] तद्भागः समग्रो विभक्तजस्येव स्वपिता[12] चेत् स्वभ्रात्रा स्वपुत्रेण[13] संसृष्टीभूतस्ततः प्रमीतस्तदा विभक्तजः स्वपितुरंशं ततो लभत इति वाक्यार्थः।

(२२१) बृहस्पतिः—

**पित्रा सह विभक्ता ये सापत्ना[14] वा सहोदराः।**
**जघन्यजाश्च ये तेषां पितृभागहरास्तु ते॥**
**अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः।**

---

१ च—विभागार्हो। २ च भागाप्राप्तात्। छ—विभागे प्राप्ताद्वा। ३ छ—व्ययीकृतशेषात्। ४ च—सहितात् प्रागप्राप्तधनात्। ५ छ—रहितात् स भागं लभत इत्यर्थः। ६ च—पितृविभक्ताः पुत्राः। ७ छ—विभागानन्तरमुत्पन्नस्य। ८ छ—लभेत। ९ छ—तद्भागादि। १० छ—तथापि च। ११ च+छ—प्रमीते तु। १२ च—पिता। १३ च—स्वपुत्रैर्वा सह संसृष्टीभूतः प्रमीतस्तदा विभक्तजः पितुरंशं। छ—स्वपुत्रेण वा सह संसृष्टीभूतस्ततः प्रमीतस्तदा विभक्तजः पितुरंशं। १४ क—सपत्ना। च—सापत्न्या वा।

(२२२) जघन्यजा इति [1] विभक्तजवदत्रापि पितृभागमात्रं लभन्त इत्यर्थः । पूर्वज [2] इतिविभक्तः सन्नित्यर्थः ।

(२२३) तथा—

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथार्णेपि दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियाः ॥

(२२४) तदयं संक्षेपः विभागसमये गर्भस्थस्य विभागानन्तरमुत्पन्नस्य विभक्तै- [3] र्भागिभिः स्वस्वभागेभ्य आकृष्य [4] भागपूरणं कर्त्तव्यम् । तदन्यस्य तु विभक्तजस्य पितृधनमात्र [5] भागितेति **मन्वा**दिमतमिति [6] स्थितमिति ।

---

## अथ पुत्राः ।

(२२५) तत्र यमः—

पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः ।
तृतीयः पुत्रिकापुत्र इति धर्मविदो विदुः ॥
पौनर्भवश्चतुर्थस्तु कानीनश्चैव पञ्चमः ।
गृहे [7] च गूढ उत्पन्नः षडेते पिण्डदाः स्मृताः ॥
अपविद्धः सहोढश्च दत्तः कृत्रिम एव च ।
पञ्चमः क्रीतकः [8] पुत्रो यश्चोपनयते स्वयम् ॥

---

१ च = विभक्तजा बहवोपि पितृभागं लभन्त इत्यर्थः । छ = त्रिभक्तजवदेते । ग = विभक्तजा बहवोऽपि पितृभागमात्रं । २ छ = विभक्तज इति । ३ च = विभागिभिः । ४ ख = पूरणं । ५ च + ग = धनभागितेति । ६ छ = स्थितम् । ७ ख = गृहेषु । ८ क = पुत्रिकापुत्रो ।

इत्येते सङ्करोत्पन्नाः षडदायादबान्धवाः ।

(२२६) नारदः—

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
पौनर्भवोपविद्धश्च दत्तः क्रीतः कृतस्तथा ।
स्वयं चोपगताः[1] पुत्रा द्वादशैते प्रकीर्त्तिताः ॥
एषां[2] षड्बन्धुदायादाः षडदायादबान्धवाः ।
पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः ॥
क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात् ॥
पूर्वपूर्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः ।

(२२७) मनुः—

पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोपविद्धश्च दायादा बान्धवास्तु[3] षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥

(२२८) बौधायनः—

औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्त्रिमौ ।
गूढञ्चैवापविद्धं[4] च रिक्थभाजः[5] प्रचक्षते ॥

---

१ च+छ=गतः । २ च+ङ=तेषां । ३ छ=बान्धवाश्च । ४ च=गूढश्चापविद्धश्च
५ च=भाजं ।

कानीनश्च सहोढश्च क्रीतं पौनर्भवं तथा ।
स्वयंदत्तं[1] निषादश्च गोत्रभाजः प्रचक्षते ॥

(२२९) औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वय-मुपगत[2]कृतक्रीता[3]नभिधाय ।

देवलः—

एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः[4] ।
आत्मजा परजाश्चैव लब्धा यादृच्छिकाः स्मृताः[5] ॥
तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् ।
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते ॥
सर्वे ह्यनौरसस्यैते पुत्रदायहराः स्मृताः[6] ।
औरसे पुनरुत्पन्ने ज्यैष्ठ्यं[7] तेषां निवर्तते ॥
तेषां सवर्णा ये पुत्रास्तृतीयांशस्य भागिनः ।
हीनास्तमुप[8]जीवेयुर्ग्रासाच्छादनसम्भृताः ॥

(२३०) औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्त[9]क्रीतस्वयमुपाग-तापविद्धयत्र[10]क्वचनोत्पादितानभिधाय ।

विष्णुः—

एषां[11] पूर्वः पूर्वः श्रेयान् स एव दायहरः स चान्यान्-बिभृयात् ।

(२३१) औरसः प्रथमः क्षेत्रजो द्वितीयः पुत्रिकापुत्रस्तृतीयः पौनर्भवश्चतुर्थः कानीनः पञ्चमः गूढोत्पन्नः षष्ठः सहोढः सप्तमः दत्तोऽष्टमः क्रीतो नवमः

---

१ च - भाजं । २ च । छ - उपागत । ३ च = कृतकक्रीतका । ४ क + ख = मुपागताः । ५ क = यादृच्छिकास्तथा । ६ छ - ह्यनौरसाश्चैते पुत्रा दाय । ७ च = तेषु ज्यैष्ठ्यं न विद्यते । ८ क - तदुप । ९ च = दत्तक । १० छ - विद्धानूयत्र । ११ ग + छ = एतेषां ।

स्वयमुपागतो दशमः अपविद्ध एकादशः कृत्रिमो द्वादशः पारशवास्त्रयोदश इति त्वन्ये ।

(२३२) विवादे विष्णुरप्येवम् ।

औरसक्षेत्रजपुत्रिकापुत्रगूढोत्पन्नकानीनपौनर्भवदत्तक्रीत-
कृत्रिमस्वयमुपगतसहोढापविद्धाः ।
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ।

(२३३) याज्ञवल्क्यः---

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमं स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयं दत्तो गर्भविन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।
पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ॥

(२३४) धर्मपत्नीह परिणीतसवर्णा तस्यां स्वयमुत्पादितः । परिणीतसवर्णायां स्वयमुत्पादित औरस इति तल्लक्षणात् । द्वितीयः पुत्रिकापुत्रः । तृतीयः क्षेत्रजः । स च क्षेत्रिणः पुत्रेच्छायां क्षेत्रिणः । बीजिनस्तदिच्छायां बीजिनः । उभयोस्तदिच्छायामुभयोयः । गूढोत्पन्नश्चतुर्थः । स मातृजातीय तद्वोढुः सुतः । कानीनः पञ्चमः । स च मातामहस्या-

---

१ ख + छ - एकादशः पारशवो द्वादशः । २ ख + छ - पारशवस्त्रयोदश । ३ छ - इत्यन्ये । ४ ख = दत्तक । ५ छ - स्वयमुपागत । ६ च = छतो मतः । ७ छ - गर्भे विन्नः । ८ च - धर्म्मपत्नी परिणीतसवर्णा । ९ ग + च + छ = स च स्वमातृजातीयः । १० च - उद्वोढुः छतः ।

पुत्रत्वे मातामहस्य मातृवोढुरपुत्रत्वे तु तस्य सुतः। पौनर्भवः षष्ठः। स च पुनर्वोढुः सुतः। दत्तकः सप्तमः। स च ग्रहीतुः सुतः। क्रीतोऽष्टमः। स च मात्रा पित्रा[1] वा धनमादाय दत्तोऽपत्यत्वेन[2] स्वीकृतः क्रेतुः पुत्रः। [3]कृतो नवमः। स चाऽपुत्रेण पुत्रीभवन[4]कामः प्रेष[5]सम्प्रतिपत्तिभ्यां कृतस्तथा कर्त्तुः पुत्रः। स्वयमुपागतो दशमः। स च मातापितृहीनः क्रोधादित्यक्तो[6] वा यस्मिन्स्वेच्छया पुत्रत्वेनाऽऽत्मानमर्पयति तस्य पुत्रः। सहोढ एकादशः। स च गर्भिणी या परिणीयते तस्यामुत्पन्नो वोढुः सुतः। अपविद्धो द्वादशः। स च मातापितृभ्यां तयोरेक[7]तरेण वा दारिद्र्यादिना त्यक्तो येन पुत्रत्वेन धृ[8]तस्तस्य पुत्रः।

(२३५) **बृहस्पतिः----**

**एक एवौरसः पुत्रो धने स्वामी प्रकीर्त्तितः।**
**तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः॥**

(२३६) **मनुः---**

**एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।**
**शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥**

आनृशंस्यं दया। प्रजीवनं भरणम्। प्रथमस्तु[9] पुत्रिकापुत्रः पश्चाज्जात औरसं तत्समांशभाक्।

(२३७) **तदाह स एव----**

**पुत्रिकायां कृतायां तु यदि पुत्रो[10]ऽथ जायते।**
**समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥**

(२३८) **कात्यायनः---**

**उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः।**
**सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः॥**

---

१ छ - पित्रा धन। २ च - अपुत्रत्वेन। ३ च - स्वयंकृतो नवमः। ४ ग + च + छ = स चापुत्रेण पुत्रीयता पुत्रीभवनकामः। ५ च - प्रैष्य। ६ छ - क्रोधादिना तत्त्यक्तो। ७ ख + च = तयोरन्यतरेण। ८ छ - वृतः। ९ ग + छ - प्रथमकृतस्तु। १० ग + च + छ = पुत्रोऽनुजायते।

इदं तु तृतीयांशहरत्वं क्षेत्रजस्य ।

(२३९) समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः ।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥

इति ब्रह्मपुराणैकमूलकत्वात् । अत्युत्कृष्टगुणदत्तकविषयमित्यन्ये ।

(२४०) पुत्रं प्रकृत्य वसिष्ठः—

तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्यते स चतुर्थभाग-भागी[2] यदि स्यात्। यदि नाभ्युदयिकेषु[3] प्रयुक्तं स्यात् ।

तस्मिन्पुत्रे स[4] प्रतिगृहीतपुत्रः । यदि स्यात्प्रभूतं धनमिति शेषः । यद्यौर-सेनाभ्युदयिकेषु[5] प्रयुक्तं यज्ञेषु विनियुक्तं[6] न स्यादित्यर्थः । (२४१) अत्र मन्वादिभिः सर्वैरेव पुत्रान्तरसत्वेप्यौरसस्यैव सकलपितृधनग्राहकत्व[7] मुक्तम् । तैरेव च[8] तेषामपि तत्रांश[9]भागित्वमुक्तमयश्च विरोधः और सस्य सगुणत्वे तेनैव सकलमृक्थं ग्राह्यम् । तस्य निर्गुणत्वे अन्येषां[10] च सगुणत्वे यथोक्तभागेन[11] तद्ग्राह्यमिति समाधेयः । एवं दत्तकस्यैव[12] क्षेत्रजस्यैव वा न्यूनाधिकांशग्रहणमपि नानास्थानोक्तं[13] तस्यैवैकस्य सगुण-त्वनिर्गुणत्वाभ्यां समाधेयम् । यस्तु श्राद्धोपक्रमेणाधि[14]कारविधायकयो-र्विष्णुयाज्ञवल्क्ययोर्विरोधः । सोऽपि सगुणत्वनिर्गुणत्वाभ्यां[15] वा विक ल्पेन[16] समाधेय इति ।

(२४२) एकमातृकयोर्विभिन्नपितृकयोस्तु विभागे विष्णुः—

अनेकपितृकाणान्तु पितृतो भागकल्पना ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

१ छ—गुणवत्तर । २ च—भागी स्याद्यदि नाभ्युदयिकेषु । ३ घ—भ्युदयेषु । ४ च—पुत्रे प्रतिगृहीतः पुत्रः । ५ ग+छ—यज्ञेषु प्रयुक्तं न स्यात् । ६ च—न स्यात् । ७ च—ग्राहकत्वमुक्तम् । छ—ग्राहित्वमुक्तम् । ८ छ—तैरेव तेषामपि । ९ छ—तत्रांश । १० ख+च—तेषां सगुणत्वे । ११ च—भागेन ग्राह्य । १२ छ—दत्तकस्य क्षेत्रजस्य वा । १३ ग+च+छ—नानासंमुक्तं । १४ ग×छ—श्राद्धेपि क्रमेणाधिकार । १५ छ—निर्गुणत्वाभ्यां विकल्पेन वा । १६ ग—वा समाधेय इति ।

पुत्रास्तु सर्वे[1] एव श्राद्धचिन्तामणौ[1] प्रपञ्चिता[2] इति नेह प्रतन्यते शास्त्रोक्तरीतिं विना ये पुत्रास्ते पुत्राभासत्वान्न ऋक्थभाजः ॥

## अथापुत्रधनग्रहणाधिकारः[3] ।

(२४३) तत्र विष्णुः----

**अनपत्यस्य धनं पत्न्यभिगामि तद्भावे दुहितृगामि तद्भावे मातृगामि तद्भावे पितृगामि तद्भावे भ्रातृगामि[4] तद्भावे बन्धुगामि तद्भावे सकुल्यगामि[5] तद्भावे सहाध्यायिगामि[6] तद्भावे[7] ब्राह्मणधनवर्जं राजगामि ।**

बन्धुरत्र सपिण्डः सगोत्रः[8] ।

(२४४) बृहन्मनुः[9]----

**सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तताचतुर्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ।**

(२४५) अनपत्यस्य पुत्रपौत्रप्रपौत्रहीनस्य **पुत्रः पौत्रः प्रपौत्रो** वेत्यादिना अमीषां पाठिकक्रमेणैव[10] स्वधाऽधिकारे[11] सिद्धे तत्समानशील[12]रिक्थग्रहणस्यापि तथैवाधिकारः सिद्धः[13] । एवञ्च प्रपौत्राभावे पत्न्यधिकारः ।

---

१ परिशिष्टे द्रष्टव्यम् (See appendix. I) २ छ प्रपञ्चिता नेह तन्यते । ३ छ = अथापुत्रधनाधिकारिणः । ४ ग + च तद्भावे भ्रातृपुत्रगामि । ५ घ = सकुल्यानन्तरं पितामहीगामीति वाक्यान्तरात । ६ च - सहाध्याय । ७ ख - तद्भावे ऋत्विग्गामि सर्वाभावे । ८ ख - सगोत्रजः । ९ छ = बृहस्पतिः । १० ग + च - पाठक्रमेण । ११ घ = स्वाधिकारे । १२ ख + ग + च + छ = शीलस्य । १३ ग + च + छ = तथैवाधिकारसिद्धेः ।

(२४६) अत्रैव वृद्धमनुः—

अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमर्थं[1] लभेत च ॥

(२४७) बृहस्पतिः[2]—

सकुल्यैर्विद्यमानैस्तु पितृभ्रातृसनाभिभिः ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥
पूर्वप्रमीताग्निहोत्रं मृते भर्त्तरि तद्धनम् ।
विन्देत्पतिव्रता नारी धर्म एष सनातनः ॥
जङ्गमं स्थावरं हेम कुप्यधान्यरसाम्बरम्[3] ।
आदाय दापयेच्छ्राद्धं मासषण्मासिकादिकम्[4] ॥
पितृव्यगुरुदौहित्रान् भ्रातृस्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्त्ताभ्यां वृद्धानाथाऽतिथींस्त्रियः ॥
तत्सपिण्डा बान्धवा ये तस्याः स्युः परिपन्थिनः ।
हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेत् ॥

(२४८) श्राद्धपरिसंख्यानस्वरसेन[5] तस्य प्रेतस्य श्राद्धानि[6] प्रत्याब्दिकानि[7] कुर्याद्धनं[8] च गृह्णीयादिति वर्त्तुलार्थः। (२४९) इदञ्च विभक्तपतिधनपरम्। पतिव्रता साध्वी। न तु पतिव्रतैव।[9] अनुमरणपर्यन्तेन पतिव्रतात्व[10]नि-श्चयाद्धनग्रहणाभावापत्तेः। तथाच साध्वी भार्या पत्युः प्रपौत्रपर्यन्ता-भावे तद्धनार्हा।

(२५०) अविभागे तु शङ्खः—

भ्रातृभार्याणां[11] न्यायप्रवृत्तानामनपत्यानां पिण्डमात्रं गुरु-

---

१ च + छ = अंशं लभेत सा। २ च + छ = बृहस्पतिरपि। ३. च + छ = कुप्यं धान्यं। ४ क = मासं षाण्मासिकं तथा। ५ च = स्वरसात्। ६ च प्रेतस्य प्रेतश्राद्धानि च। छ = तस्य प्रेतश्राद्धानि। ७ च + छ = प्रत्याब्दिकानि च। ८ ग + च + छ = धनं चाखिलं। ९ छ = पत्युरेवानुमरणपर्यन्तेन। १० च + छ = व्रतत्व। ११ ग + च = स्नुषाणांच। छ भ्रातृभार्याणां स्नुषाणां च न्यायतः

दद्याज्जीर्णानि वासांस्यविकृतानि च ।

(२५१) हारीतः—

विधवा यौवनस्था च नारी भवति कर्कशा[1]।
आयुषः क्षपणार्थं[2] च दातव्यं[3] स्त्रीधनं तथा[4]।
संसृष्टिभार्यापरमिदमिति बालरूपः ।

(२५२) अविभक्तप्रमीते तु पत्यौ तस्यांश एव नाभूदतः[5] किमियं गृह्णातु[6]। नच सैवांशप्रतियोगिनी[7] प्रापकाभावात्। नचैतान्येव[8] वाक्यानि प्रापकाणि। एषां विभक्तधनपरत्वेनाप्युपपत्तेः । अत एव भ्रातॄणां दायभाजो[9] याश्चानपत्याः स्त्रियस्तासाश्चापुत्रलाभादिति वशिष्ठ-सूत्रम्। (२५३) भ्रातृभार्यायां[10] विधवायां पत्याहितगर्भायां तद्देवरादीनां विभागे प्रक्रान्ते[11] तस्या अपि शङ्कितपुत्रप्रसवाया भाग आप्रसवं स्थाप्यः। स च तस्याः[12] पुत्रे अनुत्पन्ने[13] देवरादिभिर्ग्राह्य इति रत्नाकरादौ व्याख्या-तम्

(२५४) भारते—

स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः ।
नापहारं स्त्रियः कुर्युः पतिवित्तात्कथञ्चन ॥
अपहारमैच्छिकं दानक्रयादिकम्[14]। पत्न्यभावे दुहितृगामीति लिखितविष्णुवचनात् ।

(२५५) नारदोऽपि—

पुत्राभावेऽपि दुहिता तुल्यसन्तानकारणात्[15]।

---

१ च = कश्मला । २ छ = क्षपणार्थं हि । ३ ग = दातव्यं जीवनं सदा । ४ च + छ = सदा । ५ च = नाभूत्किमियम् । ६ च = गृह्णाति । ७ च = इयमेवांश । ८ ख = नचैतावन्त्येव वाक्यानि । ९ ग + च + छ = भागो । १० ख = भ्रातृभार्यायां पत्याहितगर्भायां । ११ छ = प्राह । १२ च = तस्याः । १३ ग = स च तस्याः पुत्रे उत्पन्ने तस्मै देयम् । १४ च + छ = विक्रयादि । १५ च + छ = दर्शनात् ।

पुत्रश्च दुहिता चोभौ[1] पितुः सन्तानकारकौ[2] ॥

(२५६) मनुरपि—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि जीवन्त्यां कथमन्यो धनं हरेत् ।

(२५७) बृहस्पतिरपि[3]—

अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ।
तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥

(२५८) यादृशी सा पितृरिक्थग्राहिणी तामाह स एव—

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताऽकृता वा पुत्रस्य पितुर्धनहरी[4] तु सा ॥

(२५९) अपुत्रस्य मृतस्य[5] कुमारी ऋक्थं गृह्णीयात् तदभावे चोढेति पराशरवचनात् । तथैवात्र क्रम इति **बालरूपः** । (२५८) नचैतत्सर्वं पुत्रिकाविषयम् । अकृतेति तु वचनेनाकृताभिसन्धिना[6] तु कृतैवैतत्परमिति[7] वाच्यम् । तस्या पुत्रसत्वेपि पुत्रसमधनग्रहणाधिकारस्य मनुनाभिहितत्वादिति । तदभावे मातृगामि **विष्णूक्तेः** ।

(२६१) बृहस्पतिरपि[8]—

भार्यासुतविहीनस्य तनयस्य मृतस्य[9] तु ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥

तदनुज्ञया मातुरनुज्ञया[10] मातृपदमत्र[11] पितुरप्युपलक्षणम् । तेन तदनुज्ञया मातापित्रोरनुज्ञयेति **पारिजातः** ।

---

१ छ = चोभे । च = चैतौ । २ छ = कारके । ३ छ = बृहस्पतिः । ४ छ = हरी भवेत् । ५ च = अपुत्रस्य कुमारी । ६ छ = वचनेन कृताभिसन्धिना तु कृताकृते । ७ ख = अभिसन्धिना तु कृतैवेत्येतत्परमिति । च — भिसन्धिकृता सा तु । ८ छ = बृहस्पतिः । ९ छ = मृतस्यच । १० छ = मात्रनुज्ञया । ११ ग + छ = मातृपदमप्यत्र ।

(२६२) **बृहस्पतिः—**

**यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु।**
**तथैव तत्सुतोपोष्टे मातृमातामहे धने ॥**

(२६३) **मनुः—**

**दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।**
**स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥**

एतत्तु द्वयं मात्राद्यभावे[1] **पत्नीदुहितर** इत्यादिक्रमानुरोधात्।

(२६४) **मनुरपि—**

**अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।**
**मातर्यपि निवृत्तायां[2] पितुर्माता हरेद्धनम्[3]।**

(२६५) दुहित्रन्तशून्यस्य[4] धनं माता हरेत्। सकुल्यान्तशून्यस्य तु धनं पितामहो[5] हरेदित्यर्थः। मात्रभावे पित्राद्यधिकारस्य व्यवस्थापितत्वात्[6]। **मात्र-भावे पितृगामीत्यादि[7] विष्णुवचनात्।**

(२६६) **अत्रैव मनुरपि—**

**पिता हरेदपुत्रस्य धनं[8] भ्रातर एव वा।**

भ्रात्रधिकारो **विष्णु**वचन[9]बलादपि[10]।

(२६७) **अत्रैव गोतमः—**

**प्रेतानां धनं ज्येष्ठस्य।**

भ्रातुरित्यर्थः[11]।

---

१ च = मातापितृद्वयाभावे। छ पुत्राद्यभावे। २ च + छ = मातर्यपिच वृत्तायां। ३ छ = धनं हरेत्। ४ क पत्नीदुहितृशून्यस्य। ५ ख = मातामही हरेदित्यर्थः। ६ ग = व्यवस्थित-त्वात्। ७ च + छ – पितृगामिविष्णुवचनात्। ८ च + छ = ऋक्थं। ९ च = वचनादेव। १० छ = बलादेव। ११ च भ्रातुरिति।

(२६८) मनुः—

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।

(२६९) आपस्तम्बः—

[1] आसन्नः सपिण्डस्तदभावे व्यवहितस्तदभावे आचार्य-स्तदभावेऽन्तेवासी ।

(२७०) याज्ञवल्क्यः—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्यः स ब्रह्मचारिणः ॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥

(२७१) पितराविल्यत्र क्रमाकांक्षायामादौ माता तदभावे पिता । विष्णुस्मृत्येक[2] मूलकत्वात् । तत्सुतो[3] भ्रातुः सुतः । अपुत्रस्य पुत्रपौत्रप्रपौत्रशून्यस्य ।

(२७२) कात्यायनः—

विभक्त[4]संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वापि माता वा तत्पितुः क्रमात् ॥

पित्रार्जितं[5] भ्रात्रादिभिरिति व्यवस्थितो विकल्पः ।

(२७३) पैठीनसिः—

अपुत्रस्य[6] स्वर्यातस्य भ्रातृगामि द्रव्यं[7] तदभावे मातापितरौ[8] लभेताम् ।

---

१ च - अपुत्रधनाधिकारी आसन्नः । २ च = स्मृत्यैकमूलत्वात् । छ = स्मृत्येकमूलत्वात् ।
३ भ्रातुः पुत्रः । ४ छ = विभक्ते । ५ ख + ग + छ = पित्रर्जितं पिता, भ्रात्रर्जितं भ्रात्रादिरिति । च = पित्रर्जितं पिता, भ्रात्राद्यर्जितं भ्रात्रादिरिति । ङ - पित्रर्जितं पित्रा भ्रात्रा वाऽर्जितं भ्रात्रादि ।
६ छ = अपुत्रस्याभार्यस्य । ७ च धनं । ८ च पितरौ ।

(२७४) देवलः—

ततो दायमपुत्रस्य भजेरंस्तु[1] सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः[2] पितापि वा[3] ॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम्।
एषामभावे गृह्णीयुः सकुल्याः[4] सहवासिनः।

(२७५) तुल्याः सहोदरा[5] एव। सवर्णा भ्रातगोत्र[6] वैमात्रेयाः। अत्र च **देवलोक्त**क्रमेण सह **विष्णुयाज्ञवल्क्यो**क्तक्रमयोर्विरोधमाशङ्क्य यथाक्रममितिपदं **देवलीयं याज्ञवल्क्यो**क्तक्रमानतिक्रमेणेति **हलायुधेन** व्याख्यातम्। **देवल**वचनलिखनानन्तरं **विष्णुयाज्ञवल्क्य**वचने[7] लिखतः **कल्पतरु**कृतोऽप्येवमेवाशयः। एतत्तु न रमणीयम्। न हि स्वोक्तक्रममुल्लङ्घ्य परोक्तक्रमो यथाक्रममिति स्वोक्तस्यार्थो[8] भवितुमर्हति। उपस्थितं[9] विहायानुपस्थितपरिग्रहे गौरवात्। एवमपि **पैठीनसि**वचनविरोधापरिहाराच्च। तस्मात्पूर्वपुरुषार्जितधने **विष्णुयाज्ञवल्[10]क्यो**क्तः क्रम इति **रत्नाकरः**।

(२७६) बौधायनः—

सपिण्डाभावे सकुल्यस्तदभावे आचार्योऽन्तेवासी ऋत्विग् वा हरेत्। तदभावे राजा।

सगोत्राभावे[11] बन्धु**र्याज्ञवल्क्यवचनात्**। स च स्वबन्धुः[12] पितृबन्धुः। मातृबन्धुश्च[13]।

(२७७) आत्मपितृष्वसुः[14] पुत्रा आत्ममातृष्वसुः[15] सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

---

१ च + छ = विभजेरन् सहोदराः। २ ग = प्रीयमाणः। ३ छ = हरेत्। ४ ग = कुल्यानां। ५ छ = सहोदराः। ६ छ = सवर्णा भ्रातरो वैमात्रेयादयः। ७ च + छ = याज्ञवल्क्योक्तवचने लिखितवतः। ८ च = मर्हतीति। ९ छ = परित्यज्यानु। १० ख - ग + छ + च = स्तदन्यधने तु पैठीनसाद्युक्तः क्रमः। ११ छ = सगोत्रजाभावे। १२ ग = आत्मबन्धुः। १३ छ = मातृबन्धुश्च। १४ च = पितुःस्वसुः। १५ च = मातुःस्वसुः।

पितुः पितृष्वसुः[1] पुत्राः पितृमातृष्वसुः[2] सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः ॥
मातुः पितृष्वसुः[3] पुत्रा मातृमातृष्वसुः[4] सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

एतेषां क्रमेणाधिकारः । बालरूपोऽप्येवम् । ब्राह्मणधनवर्जं राज्ञा ग्राह्यम् ।

(२७८) तदाह मनुः—

अहार्यं ब्राह्मणधनं राज्ञां[5] नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥

(२७९) देवलः—

सर्वत्रादायकं राजा हरेद्ब्रह्मस्ववर्जितम् ।
अदायकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

अदायकं[6] दायादशून्यम् ।

(२८०) बृहस्पतिः—

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविर्जिताः ।
तेषां धनहरो राजा सर्वस्याधिपतिर्हि सः ॥

(२८१) बौधायनः—

ब्रह्मस्वं पुत्रपौत्रघ्नं हन्यादेकाकिनं विषम् ।
तस्माद्राजा ब्राह्मणस्वं नाददीत कथञ्चन ॥

(२८२) शङ्ख-लिखितौ—

परिषद्गामि श्रोत्रियद्रव्यं न तु राजगामि ।

---

१ च = पितुः स्वसुः । २ च = पितुर्मातुःस्वसुः । ३ च = पितुः स्वसुः । ४ छ मातुर्मातृष्वसुः । च मातुर्मातुः स्वसुः । ५ च = राज्ञा । ६ ख + ग = आदायकं ।

परिषद्गो ब्राह्मणः । (२८३) तदयं संक्षेपः । पुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः तदभावे साध्वी भार्या तदभावे दुहिता तदभावे माता तदभावे पिता[१] तदभावे भ्राता तदभावे तत्पुत्रः तदभावे आसन्नः सपिण्डः तदभावे यथाक्रमं व्यवहित सपिण्डः तदभावे आसन्नः सकुल्यः तदभावे यथाक्रमं व्यवहितः सकुल्यः तदभावे मातृकुलादिः सर्वाभावे ब्राह्मणधनवर्ज राजा[२] । ब्राह्मणधने तु[३] ब्राह्मणान्तरमेव[४] ग्रहणाधिकारीति[५] ।*

(२८४) याज्ञवल्क्यः—

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्यतच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

क्रमेण प्रतिलोमक्रमेण । (२८५) तेन ब्रह्मचारिणो गुरुकुलस्थस्याचार्यः[७] यतेस्तच्छिष्यः वानप्रस्थस्य भ्रातृत्वेनानुमतोऽपरो वानप्रस्थ एव

यद्यप्यनंशा आश्रमान्तरगताः[८] इति वसिष्ठवचनाद्वा-

नप्रस्थयतिनोर्न[९] पैतामहादिधनसम्भवः तथापि वानप्रस्थस्य वार्षिकसञ्चयः । यतेस्तु कौपीनाद्येव धनमिति ।

(२८६) शङ्खः—

न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च ।
नार्याः षडागमं वित्तं बालानां पैतृकं धनम् ॥

षडागममध्यग्न्यित्यादि परिभाषितम् ।

(२८७) मनुः—

बालदायगतं रिक्थं तावद्राजानुपालयेत्[११] ।
यावत्स्यात्स समावृत्तो यावच्चातीतशैशवः ।

---

१ च = पिता तदभावे दौहित्रः । २ च = राजगामि । ३ छ — सह ब्राह्मणा । ४ च = एव । ५ छ — धनाधि । च घ धनग्रहणादि । ६ च छ सच्छिष्य । ७ छ गुरुकुलस्याचार्यः । ८ छ — ह्याश्रमान्तर । ९ च — इति वानप्रस्थयतिनोर्न पैतामहादिधनसम्भवः । ११ ग = अनुपालयेत् ।

*(See appendix 2.) द्वितीयपरिशिष्टे द्रष्टव्यम् ।

## अथ संसृष्टिविभागः[1] ।

(२८८) तत्र बृहस्पतिः—

**विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र[2] संस्थितः ।**
**पितृव्येणाथवा प्रीत्या स तत्संसृष्ट[3] उच्यते ॥**

(२८९) अस्माकमेकतमस्यापि सर्वेषामस्माकं[4] स्वमित्यभ्युपगमस्तावत्संसर्गः[5] । स चानन्यथासिद्धव्यवहारादपि[6] गम्यते । तेषां भूतभाविभवद्धनेष्वेकैकार्जितेष्वपि सर्वेषां स्वत्वानि जनयति तत्र परिसंख्यानबलात्[7]पितृभ्रातृपितृव्यैरेव विभागपूर्वकं धनमेलनं संसर्ग इति **प्रकाशः** । तन्न । आवृत्तिवाचिपुनःपदस्वरसेन विभागपूर्वकधन[8]मेलनस्यैव लाघवेन संसर्गपदार्थत्वात् । तेन विभागप्रतियोगिना पितृव्यपुत्रादिनापि संसर्गो[9] लभ्यते । पित्रादिग्रहणन्तु प्रपञ्चनमात्रम् । अतएवानास्थायां वाकार इति **रत्नाकरादयः** ।

(२९०) **नव्यास्तु** पृथग्धनानां धनमेलनमेव संसर्गो लाघवात् । न तु प्राग्विभागे सति गौरवात् । पृथग्धनत्वन्तु संसर्गतो[10] वा विभागतो वेत्यन्यदेतत्[11] । संसर्गे[12] हि संसृजतोरनुमतिर्मूलम् । सा च निसर्गतः पृथग्धनयोरपि[13] न दण्डवारिता[14] । अन्यथा पित्रादिविभक्तस्तदुत्तरजेन[15] भ्रात्रा[16] समं संसृष्टो न स्यात् । बाढमिति चेत् । न । दृश्यन्ते हि तथासंसृष्टा अपीति । बाले तु भागिनि मात्राद्यनुमत्यैव विभागात्[17] संसर्गोपि व्यवहारसंवादात्[18] ।

---

१ च—अथ संसृष्टधनविभागः । छ—अथ संसृष्टविभागः । २ छ—भ्रात्रा चैकत्र । ३ च+छ—स तु संसृष्ट । ४ ग+च+छ—स्वं । ५ ख+छ—स्वमित्युपगम । ६ च—स च व्यवहारादीनामनन्यथासिद्धत्वाद्व्यवहारादवगम्यते । छ+स च व्याहारादिनानन्यथासिद्धाद्व्यवहारादपि गम्यते । ७ ख+तत्र संख्यानपरिमाण । ८ छ—पूर्वधन । ९ छ—दिना संसर्गो । १० ग—च+छ—संसर्गतोवा । ११ च—वेत्येतत् संसर्गे तु । १२ छ—संसर्गे तु । १३ च—न तु विभागानन्तरमेवेति । १४ ग—धारिता । १५ च—पित्रा यो । छ—पित्रा विभक्त । १६ क—भ्रात्रा संसृ । १७ छ—विभागवत् । १८ च—सत्त्वात् ।

(२९१) तथा—

विभक्ता भ्रातरो ये च सम्प्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे[1] ज्यैष्ठ्यं तेषां न विद्यते ॥
कदाचिद्वा[2] प्रमीयेत प्रव्रजेद्वा कथंचन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति ।
अनपत्यस्य धर्मोयमभार्यापितृकस्य च ॥
संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाधिकम्[3] ।
धनं प्राप्नोति[4] तत्रास्य द्व्यंशः शेषाः समांशिनः ॥

एकत्रेति संसृज्येत्यर्थः । ज्यैष्ठ्यमिति अंशाधिक्यप्रयोजकहेतुसत्त्वेप्यं[5]शाधिक्यं नेत्यर्थः । विद्यार्जिते त्वस्यापवादं स्वयमेव[6] वक्ष्यति । कदा[7]चिदिति संसृष्टानामेकतमो[8] यदि प्रायणेना[9]श्रमान्तरकरणेन[10] भागानर्हो भवति तदा[11] स भागो न लुप्यते तर्हि स भागः किमन्वितो[12] भवतीत्याकांक्षायामाह सोदरस्येति संसृष्ट[13]सोदरस्येत्यर्थः ।

(२९२) सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

इति **मनुवचनेनै**कमूलकल्पनालाघवात् । तथा च सोदर्या अप्यसंसृष्टिनो न लभन्त इति भावः । (२९३) केचित्तु किञ्चिद्धनविभागानन्तरं संसर्गे वृत्ते तत एकस्मिन् संसर्गिणि प्रमीते स्थालीपुला[14]कन्यायादविभक्ते[15]ष्वपि धने[16]ष्वंशेयत्तावधारणरूपो विभागो वृत्त एवेति कृत्वा शृङ्गग्राहिकया[17] तस्या[18]प्यंशः कर्त्तव्यः । स च[19] सोदरसंसृष्टि[20]ग्राह्यः । तत्रैव[21] चानपत्यस्येत्यादि

---

१ छ — तत्पुनर्भागकरणे । २ च — यदा कश्चित् । ३ च — धनम् । ४ च — प्राप्नोति तस्य दातव्यो द्व्यंशः । ५ च — हेतुसत्वेपि नांशाधिक्यं । ६ छ — अयमेव । ७ च — कश्चिदिति । ८ छ — संसृज्य ऽ[illegible]नामेकतमो यदि प्रायणेनाश्रयान्तरकरणेन वा । ९ च — मरणेना । १० ख + च — करणेन वा भागानर्हो । ११ च — तथापि । छ — तथापि तद्भागो । १२ च + छ — किमीयो । १३ च + छ — संसृष्टि । १४ च — पाक । १५ ग + च + छ — न्यायेनाविभक्ते । १६ छ — धनेषु पितृधनेष्वंशे । १७ च + छ तया । १८ च — तस्यांशः । १९ च — तु । २० च — संसृष्टिना । २१ च — तत्र चानपत्यस्येत्यादि ।

पर्युदास इत्याहुः । तन्न । नहीयत्तावधारणं[1] विभागफलं तस्य तत्काल[2]-
जीवितस्यैव सिद्धत्वात् । किन्त्विदन्तावधारणं[3] तच्च शृङ्गग्राहिक[4]याक्षपातं
विना न भवत्येव तस्मात्प्रसूतस्य[5] प्राचीनस्य सर्वभागिस्वत्वनिवहस्य[6][7]
संकोचो वा प्रादेशिकतत्तत्पुरुषीयस्वत्वान्तरोत्पत्तिर्[8]विभागफलम् । तच्च
त्वदक्षपातविषयो[9] न मम मदक्षपातविषयो[10] न तवेति योऽयमभ्युत्थितोऽ[11]-
भ्युपगमस्तद्रूपाद्विभागात् । स च तत्तदक्षपातोपहितस्तदक्षपातश्चाक्रमि[12]-
कश्चेत्तदा राशिरेव वा विभक्तः । अथ क्रमिकस्तदा क स्थालीपुलाकन्यायः
सामग्रीभेदादिति ।

(२९४) **याज्ञवल्क्योपि—**

**संसृष्टिनस्तु संसृष्टो सोदरस्य तु सोदरः ।**
**दद्यादपहरेच्चांशं[13] जातस्य च मृतस्य च ॥**

जातस्य जीवत[14] इत्यर्थ इति **हलायुधः** । (२९५) अन्ये तु पितापुत्रयोः संसर्गे पितुश्च विभागानन्तरं[15] पुत्रे जाते पितरि[16] प्रमीते संसृष्टी पुत्रः पितुरंशं तस्मै जातकाय दद्यादित्यर्थमाहुः । (२९६) संसृष्टिनस्त्विति । प्रमीतसंसृष्टिभागे संसृष्ट्यन्तरस्य[17] ग्रहणाधिकारः । सोदराऽसोदरसंसर्गे तु सोदरस्यैवेति[18] वाक्यार्थः । एवं च पितापुत्रयोरपि संसर्गे विभक्तपुत्रान्तरसत्वे च पितुर्भागं[19] संसृष्ट्येव पुत्रः प्राप्नोति नासंसृष्टी[20] **संसृष्टिनस्तु संसृष्टीत्य**विशेषेणाभिधानात् । **विभक्तो यः पुनः पित्रेत्या**दिना पितापुत्रयोरपि संसर्गकथनात् । युक्तं चैतत् । पुत्रान्तराणां पितुर्द्धने[21] विभागेन स्वत्वस्य निराकृतत्वात् । संसर्गिपुत्रस्य तु संसर्गेण

---

१ छ = धारणरूपं । २ च = तत्कालीनजीवितस्यैव । ३ छ = किन्त्विदंत्स्ववधारणं । ४ च + छ = ग्राहिकतया । ५ ग = तस्मात्प्रसूतस्य । क = प्रसूतस्य । च = प्रमीतस्य । ६ क = निर्वाहकस्य । ७ च = निवहस्य विनाशः । ८ ग + छ = रोत्पत्तिर्वा । ९ ग = त्वदक्षविषयो । १० क + ग = मदक्षविषयो । ११ ग + च + छ = भागिनां योऽय । १२ छ = पातः क्रमिकश्चेत् । । १३ च + छ = दद्याच्चापहरेदंशं । १४ च = जीवत इति हलायुधः । १५ छ = भागानन्तर । १६ च + छ = पितरि च । १७ च = संसृष्टान्तरस्य । १८ छ = स्यैति । १९ छ = सत्वे पितुर्भागं । २० छ = नासंसृष्टीत्यविशेषेणाभिधानात् । २१ च = पितृधने स्वत्वस्य विभागेन निराकृतत्वात् । छ = पितृधनेपि भागेन ।

तस्य जनितत्वादिति[1]। (२९७) न **चानपत्यस्य धर्मोयमिति** पर्युदासश्रवणान्नैवमिति[2] वाच्यम् । तस्य संसर्गान्तरजात[3]विषयत्वात् । (२९८) तथाच संसृष्टिन:[4] पितुर्भागं विभागानन्तरजा:[5] पुत्रा लभन्ते । तदसत्वे तु संसृष्टी पुत्रो भ्रात्रादिर्वा न त्वसंसृष्टो पुत्र इतिवत्तुलार्थः ।

(२९९) **ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।**
**संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥**

इति **मनु**वचनात् । उत्तरार्द्धेन तस्यैव पितृदायहरत्वे सिद्धे तस्याभावे[6] संसृष्टिनोऽधिकारस्य युक्तत्वात् । अतएव **अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजे** इत्यपि । (३००) नन्वेवं पुत्रैः समं विभज्य भ्रात्रा समं संसृज्य ततः पुत्रमनुत्पाद्य[7] प्रमीतस्यांशः संसृष्टस्य भ्रातुः स्यान्नत्वसंसृष्टस्य पूर्वविभक्तस्य पुत्रस्येति[8] चेद्वाढम् । संसृष्टिनि सापत्ने सोदरे[9] चासंसृष्टिनि स्यादिह ।

(३०१) **याज्ञवल्क्यः—**

**अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।**
**असंसृष्ट्यपि चादद्यात् सोदरो नान्यमातृजः[10] ॥**

अन्योदर्यस्तु[11] संसृष्टी सन् अन्योदर्यस्य धनं हरेत् । नत्वसंसृष्टी[12] सन् सोदरस्तु[13] असंसृष्ट्यपि सन् आदद्याद्[14] धनमिति[15] विभिद्यान्वयः । **नान्योदर्यो धनं** हरेदिति पाठस्तु सुगमः । नान्यमातृज इत्यनुवादः । (३०२) एवं चान्योदर्यस्य[16] संसृष्टत्वं सोदरस्य तु सोदरत्वमेव तद्धनग्रहणे बीजमित्युक्तं भवति संसृ-

---

१ छ = जनितत्वात् । २ छ = ग्रहणान्नैव । ३ ग + छ = संसर्गानन्तर । ४ च = संसर्गिणः । ५ छ = गान्तरजातः । ६ ग + च + छ = तस्यैवाभावे । ७ छ = भ्रात्रा संसृज्य पुत्रमनुत्पाद्य । ८ च = विभक्तपुत्रस्येति । ९ छ = सापत्न्येऽसंसृष्टिनि सोदरे च । १० क = मातृकः संसृष्टी सन् । ११ ग + च + छ = अन्योदर्यः । १२ च = नत्वसंसृष्टो सोदरस्तु । १३ छ = सोदरस्य तु । १४ च = चादद्यात् । १५ च = धनमितिशेषः नान्योदर्यो । १६ क = एवनान्योदर्यस्य संसृष्टित्वम् ।

ऽप्यपि सभ्रन्योर्द्वयो नान्योद्वयंधनं हरेदिति[1] तु नार्थः। संसर्गविरोधात्। सम्भवन्न्यायमूलाया अप्यस्याः स्मृतेर्वेदमूलत्वापत्तेः[2]।

(३०३) नारदः—

संसृष्टानां तु यो भागस्तेषामेव स इष्यते[3]।
अतोऽन्यथांशभाजस्तु निर्बीजेष्वितरानियात्॥

तेषामेव संसृष्टानामेव। अतोन्यथा संसृष्टानामभावेंऽशभाजः[4] पुत्राद्य[5] इति शेषः। निर्बीजेषु निरपत्येषु संसृष्टिषु[6] प्रमीतेषु स भाग इतरान् संसृष्टिन इयादृच्छेदित्यर्थः। (३०४) संसर्गकाले[7] यो यस्य भाग आसीत् स पुनर्विभागकाले प्रत्यभिज्ञायमानस्तस्यैव[8] रक्षणीय इति तु न पूर्वार्थः[9]। संसर्गेण[10] समीभावे एतादृशनियमे वाक्यस्यादृष्टार्थतापत्तेः[11]।

(३०५) शङ्खः—

भ्रातृणामप्रजः[12] कश्चित्प्रेयाच्चेत्प्रव्रजेत[13] वा।
विभजेरन्धनं तस्य शेषास्तु स्त्रीधनं विना।
भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्॥
रक्षन्ति शय्यां भर्तुश्चेदाच्छिद्युरितरासु[14] तत्।
या तस्य दुहिता तस्याः पित्रंशो भरणे[15] मतः॥
आसंस्काराद्धरेद्भागं परतो विभृयात्पतिः।

शेषाः संसर्गिणः। इतरासु शय्यामरक्षन्तीषु च व्यभिचारिणीष्वित्यर्थः। तत्स्त्रीधनम्। तेन व्यभिचारिणीनां भरणं न कार्यम्। प्रत्युत स्त्रीधनमपि ग्राह्यम्[16]। दुहिताऽत्र कुमारी तेन तस्या भरणमारभ्य विवाहपर्यन्तं[17] पितृधनेन कार्यमित्यर्थः।

---

१ छ – हरेदितिवत्तुलार्थः। २ ग = मूलकत्वापत्तेः। छ = मूलत्वापत्तेश्च। ३ च = उच्यते। ४ ग = तदंशभाजः। छ = तदंशभाजस्ततपुत्रान् स भाग इयात्। ५ ग = तत्पुत्रान् स भाग यायात्। च = पुत्रान् स भाग इयात्। ६ छ – संसृष्टेषु। ७ छ – संसृष्टकाले। ८ छ = प्रतिज्ञाय। ९ ग + छ = पूर्वार्थार्थः। च = इति पूर्वार्द्धस्य नार्थः। १० छ = संसर्गे समो। ११ छ = दृष्टार्थत्वा। १२ छ = अप्रजाः। १३ च = प्रेयात्कश्चिच्चेत्। १४ ग + च + आच्छिद्युः। १५ छ – पित्रंशे भरणं मतम्। १६ च = स्त्रीधनमपि प्रीत्युत्सृष्टं। छ = स्त्रीधनमपि प्रत्युत ग्राह्यम्। १७ छ – विवाहपर्यन्तं कार्यम्।

(३०६) कात्यायनः—

संसृष्टानां तु संसृष्टाः पृथक्स्थानां पृथक् स्थिताः ।
अभावेऽर्थहरा ज्ञेया निर्बीजान्योन्यभागिनः ॥

एकस्याभावे यदन्यस्यार्थहरत्वमुक्तं[1] तद्विशिनष्टि निर्बीजेति । ते हि परस्परं निरन्वयापरभागभाज इत्यर्थः । (३०७) तदयं प्रकरणार्थ[2] संक्षेपः । संसृष्टप्रमीतस्य पूर्वविभागोत्तरजातपुत्रपौत्रप्रपौत्रान्यतमसत्वे स एव तद् भागभाक् तदसत्वे तु सकलब्रह्मचर्यादिविशेषणसम्पन्ना[3] अष्टविधमैथुननिवृत्ता भार्या अन्या त्वव्यभिचारिणी भरणीया नत्वंशहरा । तत्कन्यायास्तु विवाहनिष्पत्तिपर्यन्तं[4] कर्म भरणं च पितृधनेन कार्य्यम् । पितुरपि साधुभार्यावद् भरणमात्रम् । एतेषामसत्वे तु प्रमीतैकसंसृष्टिधनमपरः संसृष्टी सकलमेव लभते । सोदराऽसोदरसंसर्गे तु सोदर एव संसर्गी[5] लभते । असोदरमात्रसंसर्गे तु सोदरसत्वे सोदरासोदरौ तुल्यवल्लभेते अन्यतरसत्वेऽन्यतर एव । संसृष्टानां त्वेकतमस्य संसर्गोत्तरं विद्यार्ज्जितं सहजतोऽविभक्तेऽप्यर्जकस्य[6] द्व्यंशकत्वं संसृष्टयन्तराणामेकैकांशकत्वमिति ।

(३०८) प्रकाशे—

स्थावरं द्विपदं चैव यद्यपि [illegible]तम् ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं[7] तेऽप्यभिकांक्षन्ति न[8] दानं न च विक्रयः[9] ॥

(३०९) अस्यापवादः[10]—

एकोपि स्थावरे कुर्य्या[illegible]यम् ।

---

१ ग + घ + ङ = यदपरस्यार्थहरत्वमुक्तम् । २ ङ = प्रकरणार्थ इति संक्षेपः । ३ ब्रह्मचर्यादि संपन्ना । ४ ङ = विवाहपर्यन्तं । ५ ङ = संसृष्टी । ६ ङ = विभज्येऽप्यर्जकस्य । ७ ग + घ + ङ = वृत्तिं च तेभिकांक्षन्ति । ८ घ = वृत्तिकाभो विगर्हितः । ९ ङ = विक्रयः । १० घ = अस्यापवादमाह ।

**आपत्काले कुटुम्बार्थे[1] धर्मार्थेषु[2] विशेषतः ॥**

विभक्तस्यापि स्थावरमपि यत्साधारण्यामापदि[3] तत्कन्यादानार्थं वा देयं विक्रेयञ्चेत्यर्थः[4] ।

(३१०) यत्तु[5]—

**विभक्ता अविभक्ता वा दायादाः स्थावरे समाः ।**

**एको ह्यनीशः सर्वस्य[6] दानाधमनविक्रये ॥**

तद्विभक्तेष्वविभक्तत्वसंशये[7] तन्निरासाय विभक्तस्याप्यनुमतिस्तत्र कारयितव्येत्येतत्परम्[8] ।

(३११) यत्तु—

**ग्रामोणज्ञातिसामन्तदायादानुमतेन तु[9,10] ।**

**हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥**

इति तत्रापि[11] ग्रामदायादज्ञात्यनुमतिर्दानप्रकाशनार्थम्[12] । सामन्तानुमतिः सीमाविवादनिरासाय[13] हिरण्योदकदानं तु **स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया।** इत्यादिनिषेधात्[14] ।

(३१२) **भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।**

**उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥**

इत्यादिना[15] प्रशंसादर्शनाच्च विक्रयेऽपि कर्त्तव्ये हिरण्यमुदकं च दत्वा दानरूपेणैव विक्रयः कार्य इत्येतत्परम् ।

---

१ छ - कुटुम्बार्थम् । २ ग + छ - धनार्थे तु । च - धर्मार्थे च । ३ छ - साधारण्या । ४ च - वा विक्रेयमित्यर्थः । छ - विक्रेयं वेत्यर्थः । ५ छ - मनुः । ६ च + छ - सर्वत्र । ७ च - इति विभक्तानामपि [illegible] न जातस्तस्य [illegible] तिष्ठति तेन तत्रैकोऽनीशः पृथग्भूतेषु [illegible] सिद्धिरेवेत्येतत्परम् । छ - एतद्विभक्तेष्वविभक्त । च - विभक्तेष्वविभक्त । ८ च - त्यन्ये । ९ च + छ - [illegible] । १० छ - तु च । ११ छ - अत्रापि । च - तत्रापि । १२ छ - मतिस्तु लोकाचार । १३ [illegible] निरासार्थं । १४ छ - इति । १५ च - इत्यादि दानप्रशंसनाच्च विक्रये कर्त्तव्ये [illegible] दत्वा । छ - [illegible]नात् ।

## अथ विभागनिर्णयः ।

(३१३) तत्र नारदः—

विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्त्तनात् ॥
भ्रातृणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽयं भवेत्तेषां पृथक् पृथक् ॥
दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः ।
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते हि रूक्थिनाम् ।
विभक्तानभिगच्छेयुर्लेख्यमप्यन्तरेण तान् ।

(३१४) विभागरूपो धर्मो विभागधर्मः । ज्ञातयो विभागद्रष्टारः । भागलेख्य मक्षपत्रादि पृथक्कार्यम् पृथगायव्ययादि । विभागान्तरीयको धर्म्मो वैश्वदेवादिक्रिया । तथा परस्परनैरपेक्ष्येण दानग्रहणम् । पशुक्रयादि अन्नोत्पादनं पृथक् गृहं च पृथक् क्षेत्रं च पृथक् । परिग्रहो बन्धकादेः । पाकधर्मः पार्वणादिः । आगमो धनार्जनम् । व्ययो धनविनियोगः । तथा एकस्य ऋणादिप्रयोगेऽपरः साक्षी चेत् प्रतिभूश्चेत् ग्रहीता चेत् तदा तौ परस्परविभक्तौ ज्ञेयौ ।

(३१५) याज्ञवल्यः—

विभागस्य तु सन्देहे ज्ञातिसाक्ष्यभिलेख्यकैः ।

---

१ च = पश्वर्थ । २ ग + ङ -- दानग्रहण । ३ च - प्रवर्तन्ते स्वक्रकृथतः । ४ ग -- विभागक्रियाद्रष्टारः । च -- साक्षिणः । ५ च -- अंशपत्रादि । ६ च -- विभागानन्तरीयकं । ङ -- विभागनान्तरीयको । ग + छ -- विभागनान्तरीयकं । ७ च -- अर्थोत्पादनम् । ८ च + छ - धनार्जनादिः ९ छ -- प्रयोगे परः । १० ग + च + ङ -- एकेन दत्तमपरो गृह्णाति चेत्तदा तौ परस्परं विभक्तौ ज्ञेयौ । छ - प्रतिभूश्चेत् एकेन दत्तमपरश्चेद्गृह्णाति तदा तौ परस्परविभक्तौ ज्ञेयौ ।

**विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतुकैः ॥**

यौतुकैः पृथग्भूतैः। यु अमिश्रण इति धात्वनुसारात्। तेनामिश्रैर्गृहैः क्षेत्रैश्च विभागभावना ज्ञेयेत्यर्थः। अनन्यथासिद्धविभागमनुमापयतीति भावः।[1]

(३१६) **भ्रातृणामथ[2] दम्पत्योः पितुः पुत्रस्य चैव हि।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते तु न स्मृतम्[3] ॥**

एतेषां[4] विभागात् प्राक् परस्परं प्रातिभाव्यादिव्यवहारो नेत्यर्थः[5]। (३१७) ननु **जायापत्योर्न विभागो विद्यते** इत्यापस्तम्बवचनात्तयोर्विभागप्रसङ्ग एव नास्तीति चेत्। **जायापती अग्निमादधीयाताम्** इत्यादिनाग्न्याधाने सहाधिकारात्[6]। तथा **मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं** तथा **पत्न्याज्यमवेक्षते[7] यजमानो वेदं बध्नाति** इत्यादिश्रवणात् तत्तदाधानजन्याग्निसाध्यकर्मसु[8] श्रौतेषु तथा **कर्म स्मार्त्तं विवाहाग्नौ** इत्यादिस्मरणात् जायापत्युभयसाध्यविवाहाग्निसाध्येषु स्मार्त्तकर्म[10]स्वावसथ्यादिहोमेषु तयोः साहित्येनाधिकारः तथैव तत्पुण्यफलेष्वपि[11] तयोः साहित्यं तत्प्रकरण एव **दिविज्योतिरजमारभेयाताम्[12]** इत्यादिश्रवणात्। न तु[13] तदन्यसाध्येष्विष्टापूर्त्तादिष्वपि[14]। (३१८) धनविभागस्तु तयोर्नास्तीति वाक्यार्थस्य शंकापि नास्ति। आपस्तम्बवचनस्य इज्याप्रकरण आम्नानात्। पाणिग्रहाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु चेति तद्वाक्यशेषात्। (३१९) पत्न्यधिकरणे पत्न्या अपि[15] पतिधने स्वत्वमुक्तमिति[16] तस्या अपि तर्हि

---

१ ख+ग = अनन्यथासिद्धमिदं विभागमर्थापयतीति भावः। छ = अनन्यथासिद्धमिदं पृथग्भूतगृहादिकं विभागमर्था। घ = सा वान्यथासिद्धविभागमनु। २ ग+छ = तथा। भ्रातॄणां। ३ ख = न तत्स्मृतम्। ४ क = एषां। ५ ग = नेति भावः। ६ घ = सहाधिकारित्वात्। ७ ख = अवेक्षते। ८ ग = आधानजन्याग्नि। ख = तदाधान। ९ छ+ग = श्रवणात्। १० ख = स्मार्तेषु। ११ ग = तत्पुण्यज। ख = पुण्यपाप। १२ ख = आरभेतामित्यादि। छ = दिविज्योतिरजरमारभेतां। १३ छ = न तत्तदन्य। १४ ख+छ = पूर्तेषु। १५ ख = अपि धने। १६ ख = स्वत्वमिति।

पत्न्या सह विभागो भवेद्यदि शाब्दस्तन्निषेधो[1] न स्यादितिचेन्[2] न। **अधनास्त्रय एवैते भार्या दासस्तथा सुतः** इत्यादिना तस्या अधनत्वोक्तेरित्यवेहि[3]। पत्न्यधिकरणं त्विज्यामात्रे सहत्वेना[4]-धिकारसिद्धौ नत्वधिकरणेन योषिदधनत्ववचनबाधः। तस्य न्यायत्वेन वचनबाधकत्वात्[5]। विभागस्तु दम्पत्योः **पत्न्यः कार्याः समांशिका** इति वचनादिति **रत्नाकरः**।

(३२०) **बृहस्पतिः—**

**पृथगायव्ययधनाः कुसीदं च परस्परम्।**
**वणिक्पथं[6] च ये कुर्युस्ते विभक्ताः परस्परम्॥**

(३२१) येऽन्योन्यमृण[7]क्रिया[8]व्यवहारं कुर्वन्ति तेऽन्योन्यं विभक्ता वेदितव्या इत्यर्थः।

(३२२) **विभक्तकृत्यमाह नारदः—**

**ग्ध्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः।**
**सम्यक्कर्म[9]गुणोपेता न चेत्कृत्येषु सङ्गताः[10]॥**

विभक्ताश्चेन्न संसृष्टास्तदा तेषां वैश्वदेवादिर्द्धर्मा[11]। कुशीदादिक्रिया। परिपालनादिकं कर्म। शुश्रूषादिर्गुणः। एतत्सर्वं पृथक् कर्त्तुमर्हतीत्यर्थः।

(३२३) **विभागफलमाह स एव—**

**स्व[illegible]दे ते दद्युर्विक्रीणीयुरथापि वा।**
**कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै॥**

१ छ=शाब्दस्तु निषेधो। २ ख=चेन्नैवम्। ३ छ=अधनोक्ते। ४ ख=साहित्ये। ५ छ=वचना। ६ ख=पथश्च। ७ छ=येन्योन्यं क्रयादि। ८ ग=क्रयादि। ९ ख+ख=[illegible]गुणो-पेता। १० छ=सम्मताः। ११ छ=देवादिर्धर्माः।

## अथ क्रियाबलाबलम् ।

(३२४) तत्र याज्ञवल्क्यः—

सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वैव[1] बलवत्तरा ॥

क्रियात्र समानजातीया ।

(३२५) अत एव बृहस्पतिरपि[2]—

द्विकेनार्थं समादाय प्रपन्नः पञ्चकं तु यः ।
लाभं तत्र प्रमाणं स्यात् पश्चिमं यद्विनिश्चितम्[3] ।

(३२६) अस्यार्थः—द्विकशतवृद्ध्या प्रागर्थमादाय ऋणिकः कयापि स्वकार्यतया[4] पञ्चकं[5] लाभं शते[6]ऽङ्गीकरोति तदा पश्चिमं[7] प्रमाणं तदुत्तरक्रियाप्रमाण[8]-मिति । अनयोश्च क्रिययोर्वृद्धिव्यवस्थात्वेन साजात्यम् । उत्तरक्रियाबल-वत्वमौत्सर्गिकमाध्यादौ[9] तेन पुनराहितं पुनर्दत्तं पुनर्विक्रीतं च निवर्त्य-मित्यर्थः । उपलक्षणं चैतत् । तेन दत्वा विक्रीतं[10] विक्रीय वा दत्तं निवर्त्य-मस्वामिकृतत्वाविशेषात् ।

(३२७) अत एव—

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारो[11] यथा स्थितिः ॥

इति ।

(३२८) बृहस्पतिः—

उत्तरोत्तरबन्धेन प्रागूबन्धः शिथिलो भवेत् ।
यः पश्चिमः क्रियाकारः स तु स्याद्बलवत्तरः ॥

---

१ छ=पूर्वा तु । २ छ=बृहस्पतिः । ३ छ=यद्वि । ४ ब=कया स्वकार्यतया । ५ पञ्चकं लाभं चेदङ्गी । ६ ब=शते यदि । ७ क=शते प्रपन्नस्तदा पश्चिमं । ८ छ=प्रमाणमुत्तरा क्रिया । ९ ब=छ=अस्यापवाद आध्यादौ । १० छ=विक्रीतं निवर्त्यं । ११ छ=व्यवहारे ।

**न्यासं कृत्वा[1] ततश्चाधिं[2] कृत्वा वाऽऽधिं करोति यः ।**
**विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा ॥**

(३२९) बन्धोऽत्र व्यवस्था । तेन पूर्वा व्यवस्था दुर्बला उत्तरा तु[3] क्रिया बलवतीत्यर्थः । इदमेवोदाहरति न्यासमित्यादि प्रथमं न्यासमुत्तर आधिः । प्रथमं चाधिमुत्तरो विक्रयोऽपवदतीत्यर्थः । (३३०) न्यासो धारणमात्रम् । आधिः परवशीकरणमित्यनयोराधिर्बलवान् । आध्यपेक्षया स्वत्वध्वंसफलिका[4] क्रिया दानविक्रयादिरूपा बलवती[5] विक्रयादेः सर्वस्वत्वध्वं-[6]सकस्य पुनः करणे प्रथमो बलवान् । आध्यादेः[7] पूर्वस्वत्वध्वंसाजनकस्य[8] च पुनः करणेऽप्येवं पूर्वस्वत्वध्वंसाजनकतज्जनकयोस्तु चरमो बलवानिति समुदायार्थः । एवमेव व्याख्याय व्यवहारोप्येवमिति[10] **रत्नाकरोपि** । (३३१) आधिविक्रयदानानामन्तरालसौक्ष्म्येण[11] पौर्वापर्यानिश्चये त्वाह **स एव**—

**कृतं चेदेकादेऽह्नि विक्रयाधिप्रतिग्रहम्[12] ।**
**त्रयाणामपि[13] सन्दिग्धे कथन्तत्र विचारणा ॥**
**त्रीण्येव हि प्रमाणानि विभजेरन्यथांशतः ।**
**उभौ चार्थानुरूपेण विभागेन परिग्रहः[14] ॥**

(३३२) आधिधर्तृक्रेतृसम्प्रदानैस्तद्वस्तु समांशेन विभज्य ग्राह्यमित्यर्थः। आधिधर्तु-रत्रांशोल्पीयानाधेर्हीनबलत्वादिति[15] **हलायुधः** ।

---

१ च = दत्वा । २ छ = परत्राधिं । ३ छ = उत्तरक्रिया । ४ छ = फलिका क्रयादिरूपा क्रिया । ५ च + छ + क = बलवती न तु बन्धकस्तदजनको बलवानिति । ६ ख + ग = पूर्व । ७ छ = उदीच्या साधारणस्वत्वलक्षणफलस्य पूर्वजातासाधारणपरस्वत्वलक्षणफलेनोत्पत्तिप्रतिबन्धात् । ८ च + ख = पूर्वध्वंसजनकस्य । पूर्वस्वत्वध्वंसाजनकस्य च पुनः करणेप्येवं । ख + ग + च = पूर्वस्वत्वध्वंसाजनकतज्जनकयोस्तु । च = विक्रयादिरूपा । छ = क्रयादिरूपा क्रिया । ९ छ = पूर्वः पूर्वस्वत्वध्वंसाजनकपूर्वस्वत्वध्वंसजनकयोस्तु । १० क = व्यवहारोप्येवमपीति । ११ च = अन्तरापौर्वापर्या । १२ ग = विक्रयादि । १३ छ = सन्देहे । १४ छ = प्रतिग्रहः । १५ च = न बलवानाधे । छ = लघीयान् ।

## अथ द्यूतसमाह्वयौ ॥ १७ ॥ १८ ॥

(१) तत्र मनुः—

अप्राणिभिर्यत्क्रियते[1] तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

अप्राणिभिः पाशकाद्यैः ।

(२) बृहस्पतिः—

अन्योन्यं परिगृहीताः[2] पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणाः प्रवदन्ति[3] समाह्वयम् ॥

(३) मनुः—

प्रकाशमेतत्तास्कर्यं[4] यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतं समाह्वयं चैव यः कुर्याद्यश्च कारयेत् ।
तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

(४) कात्यायनः—

द्यूतं नैव तु सेवेत क्रोधलोभविवर्द्धनम् ।
असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥
ध्रुवं द्यूतात्कलिर्यस्माद्विषं सर्पमुखादिव ।
तस्माद्राजा निवर्त्तेत विषये व्यसनं हि तत् ॥

(५) बृहस्पतिः—

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।
तत्प्रवर्त्तितमन्यैश्च राजभागसमन्वितम् ॥

---

१ क = क्रीडाभिः । २ ख = अन्योन्यप्रगृहीताश्च । ३ ग + च + छ = दृतं वदन्ति । ४ च = प्रत्यक्षमेतत् ।

सभिकाधिष्ठितं कार्यं तस्करज्ञापकं हि तत् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥

(६) द्यूतं तावन्मनुना निषिद्धमन्यैस्तु[1] तस्करनिरूपणार्थं तद्विहितं । तदपि ससभिकं सराजकरणं[2] चेत्यर्थः ।

(७) याज्ञवल्क्यः—

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ।
एकमुखं सभिकाख्यराजपुरुषाधिष्ठितम् ।

(८) बृहस्पतिः—

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥

(९) बृहस्पतिः—

ग्लहः[3] प्रकाशः कर्त्तव्यो [illegible]चाः कूटदेविनः ।
ग्लहो[4] द्यूतपणः स व्यक्तः[5] कर्त्तव्यः ।

(१०) तथा—

सभिको ग्राहकस्तस्य द[illegible]त्रे नृपाय च ।

(११) याज्ञवल्क्यः—

प्राप्ते नृपतिभागे तु प्रसिद्धे द्यूतमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥

(१२) नारदः—

अनि[illegible] यो राज्ञा द्यूतं कुर्यात्तु मानवः ।

---

१ छ = अन्यैस्तस्कर । २ च = पुरुषश्चेत्यर्थः । छ = सराजपुरुषकमित्यर्थः । ग = सराजकं ।
३ क = ग्रहः । ४ छ = ग्रहो । ५ ग = सद्व्यक्तः । च = स च ।

न स तं प्राप्नुयात्कामं नियमं चैव सोऽर्हति ॥

परिहासकृतं यच्च यच्चाप्यविदितं नृपे ।

तत्रापि नाप्नुयात्कामं नियमञ्चैव सोऽर्हति ।

अथ वाऽभिमतं तयोर्दीपयतस्सदैव तु ।

भक्ष्यभोज्यान्नपानानि अल्पान्यन्यानि कानि च ॥

प्रीत्या तु सकृदाजीवेत् प्रसङ्गन्तु विवर्जयेत् ।

नियमो दण्डः ।

(१३) बृहस्पतिः—

कूटाक्षदेविनः पापा राजभागहराश्च ये ।

गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥

(१४) विष्णुः—

कूटाक्षदेविनां करच्छेदः । उपधिदेविनां संदंशच्छेदः ।

उपधिश्छद्म । संदंशोऽङ्गुष्ठतर्ज्जन्यौ ।

(१५) याज्ञवल्क्यः—

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपाधिदेविनः ।

दण्डचिह्नं संदंशच्छेदकरच्छेदविवासनादि कूटाक्षदेविनामपराधलाघव-गौरवानुसारेण ।

(१६) कात्यायनः—

राज्ञा प्रवर्तितान्धर्मान् यो नरो नानुपालयेत् ।

गर्ह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥

१ ख=विनयं चैव । २ ख=चेत्स्यात् । ३ ग+घ=कानिचित् । ४ ख=दीव्येत् । ५ ख+ङ=गणानां । ६ क=च्यूते कूटदेविनां । ७ ङ=सचिह्ना । ८ ङ=कूटाक्षोपाधि । ख+ङ=निर्वासनानि ।

## अथ प्रसङ्गाद्दण्डचिन्ता ।

(१७) तत्र मनुः—

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥
तद्देशकालौ[१] शक्तिं च विद्याञ्चावेक्ष्य तत्त्वतः ।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु[२] ॥
स राजपुरुषो[३] दण्डः प्रणेता[४] शासिता च सः ।
चतुर्णामाश्रमाणां तु[५] धर्मस्य प्रतिभूः स्मृतः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति[६] ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः[७] ॥

---

१ ग + च – तं देशकालौ । २ ङ + छ – वृत्तिषु । ३ च + छ + ङ – राजापुरुषो । ४ ग + छ – स नेता । ५ छ – ञ्च । ६ – एष हि । ७ छ – एतदग्रे 'तथा ।

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥

तदिति । तदर्थं धर्मं धर्मव्यवस्थापकम् । आदरार्थमभेदोपचारः । ब्रह्मतेजोमयं हिरण्यगर्भतेजः प्रकृतिकम् । इयमपि स्तुतिः । विषय ईश्वरः । राजा तु प्रजारञ्जनात् । पुरुषः परमपुरुषस्य प्रजानां हृदि स्थितत्वात् । नेता प्रभुः शासिता सुधर्मप्रवर्त्तयिता जागर्ति । जागरितृकार्यचौरादिनिराकरणकारित्वात् । यत्र श्यामो लोहिताक्षो दण्डो दण्डाधिष्ठातृदेवता चरति तत्र प्रजा विवर्द्धन्ते । नेता शासनकर्त्ता स चेद्विचारयति ॥ तथा ।

शुचिना सत्यसन्धेन तथा शास्त्रानुसारिणा ।
दण्डः प्रणयितुं शक्यः सुसहायेन धीमता ॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥
असहायेन मूढेन लुब्धेनाऽकृतबुद्धिना ।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥

समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः[1] ॥
यदि न प्रणयेद्राजा दण्डं दण्डेष्वतन्द्रितः ।
शूले मत्स्यानिवाहिंस्युरबलान्[2]बलवत्तराः ॥
अद्यात्काकः पुरोडाशं श्वा[3] च लिह्याद्धविस्तथा ।
स्वाम्यं च न स्यात्कस्मिंश्चि[4]त्प्रवर्त्ते[5]ताधरोत्तरम्[6] ॥
सर्वो दण्डजितो लोको दुर्लभो[7] हि नरः शुचिः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥
दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ।
सर्वलोकप्रकोप[8]श्च भवेद्दण्डस्य विभ्रमात् ॥
[9]यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥

---

तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते ।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥
दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥
ततो दुर्गं च राष्ट्रं च लोकं च स चराचरम् ।
अन्तरिक्षगतांश्चैव ऋषीन्देवांश्च पीडयेत ॥' इत्यधिकः पाठः ॥

१ छ=एतदग्रे । 'समीक्ष्यकारिणं देशकालादि विमृष्य कारिणम् । मूढेन सम्यगुत्प्रेक्षाहीनेन । अकृतबुद्धिना अनभ्यस्तशास्त्रेण कामात्मा स्वच्छन्दचारी । विषमः पक्षपातप्रयुक्तासच्चेष्टः । सुमहत्तेजः तीक्ष्णतया । ततः सबान्धवनृपहननानन्तरम् । सुधृतो यथार्हं धृतः । तथा—' इत्यधिकः पाठः ॥ २ च+छ=दुर्बलान् । ३ च=श्वाच । ४ च=श्च । ५ च=वरो । ६ छ=एतदग्रे 'दण्ड्येषु दण्डार्हेषु । अधरोत्तरम् उत्कर्षापकर्षं वैपरीत्यम् । तथा—' इत्यधिकः पाठः ॥ ७ क=दुर्बलो हि । ८ च+छ=प्रलोभश्च । ९ छ=यत्र श्याम इत्यारभ्य नृपमेव सबान्धव मित्यन्तः पाठो नास्ति ।

[1] तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्[2]थकोविदम् ॥
तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्त्तते ।
कामात्मा विषमः[3] क्षुद्रो दण्डेनैव [4]निहन्यते ॥
दण्डो हि [5]महत्तेजो दुर्द्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥
[6]सर्वतो धर्मषड्भागो भवत्यस्य हि रक्षितु[7]ः ।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षितुः ॥
यदधीते यद्यजते यद्ददाति यदर्च्चति ।
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥
रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन् ।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥

(१८) तदनुमत[8]मित्यादिपूर्वोक्तराजप्रयोजनार्थं । समीक्ष्येति । शास्त्रानुसारेण स कृत[9]ः श्रेयसे[10]ऽन्यथा तु प्रणे[11]तुरनिष्टाय भवेदित्यर्थः । विभ्रमोऽन्यथा-[12]करणमकरणञ्च राजानं भूपं तेन भूपस्यैव तत्प्रणयने अधिकार इत्युक्तं कामात्मेत्यादि प्रणेतेत्यर्थः बान्धवोऽत्र पुत्र[13]ः ।

(१९) तथा—

[14]यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्ड[15]घ्नौ स राजा शक्रलोकभाक् ॥
एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके ।
साम्राज्यकृत् सजात्येषु लोके[16] चैव यशस्करः ॥

इति श्रीमहामहोपाध्यायमिश्रश्रीवाचस्पतिविरचितो विवादचिन्तामणिः समाप्तः ॥

---

१ च + छ = दण्डस्यास्य प्र । २ क = कर्मार्थं । ३ च + छ = विषयः । ४ छ = विहन्यते । ५ छ = तेजा ६ ग = धर्मतः सर्वषड्भागो राज्ञो भवति रक्षितुः । ७ छ = ह्यरक्षतः । अधर्मादपीत्यादि-श्लोकार्द्धो नास्ति । ८ ग + च + छ = तदर्थमित्यादि । ९ च + छ = घृतः । १० छ = श्रेयसो । ११ छ = भेतुरनिष्टाय स । १२ ख = विभ्रमोन्यथाकरणं च राजानं । छ = विभ्रमोऽन्यथाकरणमकरणं । १३ छ = पुत्राः । १४ छ = स्तेनो यस्य । १५ ग + च = दण्डौ च । १६ च + छ = लोके पूज्यो भवेन्नृपः ।

# APPENDIX I.

## ( प्रथमपरिशिष्टम् )

# अथ श्राद्धचिन्तामणिस्थ-

## द्वादशविधपुत्रलक्षणानि ॥

### अत्र च पुत्रा द्वादश भवन्ति ।

तथा च **नारद :—**

**औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।**
**कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥१॥**
**पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ।**
**स्वयञ्चोपगतश्चैव पुत्रा वै द्वादश स्मृताः ॥२॥**

पारसवश्च त्रयोदशः । तत्रादौ **औरसः** । तत्र **विष्णु :—**

**स्वक्षेत्रे स्वयमुत्पादितः प्रथमः पुत्रः । मनु :—**

**संस्कृतायां सवर्णायां स्वयमुत्पादयेत्तु यम् ।**
**तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥**

सवर्णा द्विजस्य द्विजा । तेन ब्राह्मणपरिणीतक्षत्रियावैश्ययोरपि संग्रहः । अथ **क्षेत्रजः** ।

नियुक्तायां सपिण्डेनोत्तमवर्णेनोत्पादितः क्षेत्रजो द्वितीयः । स च वोढुः पुत्रजनकतासामर्थ्यें तन्नियोगे तदसत्त्वे च द्वैधप्रवृत्त्या । तदाह **मनु :—**

**यस्तल्पजस्य मीतस्य क्लीवस्य व्याधितस्य च ।**
**स्वधर्मेण नियुक्तायाः स ज्ञेयः क्षेत्रजः सुतः ॥**

तल्पो भार्या । व्याधिरत्राप्रतिकार्यो विवक्षितः । स्वधर्मेण घृताभ्यक्तत्वादिना ।

तदाह **मनु :**

**विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।**
**एकमुत्पादयेत्पुत्रं द्वितीयं न कदाचन ॥**
**विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ।**
**गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम् ॥**
**नियुक्तौ यौ विधिं हित्वा वर्त्तेयातां तु कामतः ।**
**तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥**

अयञ्च बीजिनोऽपि पुत्रिकासतामर्थितयोरपि । तदाह **मनुः**—

**क्रियाभ्युपगमात्त्वेतद्वीजार्थं यत् प्रदीयते ।**
**तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥**

क्रियाभ्युपगमश्च यदा द्वयोरपुत्रयोः क्षेत्रबीजाभ्यां यदपत्ये जायेत तदावयोः एवं रूपः । तदाह **याज्ञवल्क्य :**

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥**

अयं द्विपितृकश्चेत्तदा द्विगोत्रोऽपि । क्षेत्रजमुपक्रम्य । स एव द्विपिता द्विगोत्रश्च द्वयोरपि स्वधारिक्थभागिति **बौधायन**वचनात् । बीजिनोत्पन्नापत्येपि तथाभ्युपगमे द्विपितृक एव । तथा च **स्मृति :—**

**अथ यच्छेषास्वस्मासु भार्यासु अपत्यं न स्यादथ यदि स्यादुभाभ्यामेव दद्युः ॥**

क्षेत्रमन्येऽपि स्त्रियाक्रान्तत्वाद्विपितृक एव । यदाह **लघुहारीत :—**

नाबीजं क्षेत्रं फलति नाक्षेत्रं बीजं वपेत्युभयोरपत्यमिति । स्त्रिया तु शुक्रग्रहणे बीजिन एव ।

यदाह **नारद :**

**जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा ।**
**अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ॥**

दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो गता ।

अशुल्कभाजः क्षेत्रिण इति शेषः ॥ एवं बीजिनोऽपि शुल्कबोजत्वापक्षेत्रिण एव न्यायसाम्यात् । अनेन च क्षेत्र्यादित्रिकाय बीज्यादित्रिकाय पृथक् पिण्डा देयाः । तदाह **नारद :—**

ज्यायांश्च मुख्यका दद्युर्द्वाभ्यां पिण्डं पृथक् पृथक् ।

रिक्थादर्द्धं समादद्युर्बीजिक्षेत्रिकयोस्तथा ॥

पृथगिति फलातिशयार्थम् । **षड्भ्यस्त्रयश्च पिण्डा इति बौधायनवचनात् ।**

**मातामहादयस्तत्पक्षद्वये पार्वणं समाचरेत् ॥**

अत्र चोत्पादकाय प्रथमतः पिण्डदानम् । तेषामुत्पादयितुः प्रथमतः पिण्डो भवतीति **हारीत**वचनात् । अस्य चैकं पितृसत्त्वेऽप्यपरपितृपार्वणेऽधिकारः ।

तदाह **मरीचि :—**

सगोत्रादन्यगोत्राद्वा यो भवेद्विधवासुतः ।

पिण्डश्राद्धे विधानश्च क्षेत्रे प्राक् च प्रदापयेत् ॥

बीजिने च ततः पश्चात् क्षेत्री जीवति तत्क्वचित् ।

बीजिने दद्युरादौ तु मृते पश्चात् प्रदीयते ॥

उभौ यदि मृतौ स्यातां बीजिन्यादौ तदाहरेत् ।

क्षेत्रिण्यादौ तु दत्तं चेद्बीजिने नोपतिष्ठते ॥

क्षेत्रिण्यादाविति । उभयमृतत्वपक्षे त्वादौ क्षेत्रिणे यद्दत्तं तद्दत्तं स्यात् । बीजिने यद्दत्तं तन्नोपतिष्ठते इत्यर्थः । तथा चान्यतरमरणे तत्त्रिकस्यैव । उभयमरणे पिण्डभेदपक्षे बीजित्रिकायादौ ततः क्षेत्रित्रिकाय पिण्डाभेदपक्षे तु बीजिक्षेत्रिणोरेवं तत्पितरावेव तत्पितामहौ च निर्दिश्य पिण्डो देयः । मातामहान्वयस्तु सर्वत्राविकलपिण्डपरं श्राद्धपदम् । तेन श्राद्धेष्वेष एव क्रम इत्यवधेयम् । अथ **पुत्रिकातत्पुत्रौ** । तत्र **वसिष्ठ :—**

**तृतीया पुत्रिका विज्ञायते** तत्र **मनु :—**

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।

यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥

पुत्रिकामिति पुत्रस्थानीयाम् । अनेनेति गोतमोक्तो विधिर्द्रष्टव्यः ।

**वसिष्ठ :—**

> **अभ्रातृकां प्रदास्यामि तुभ्यङ्कन्यामलङ्कृताम् ।**
> **अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥**

**गोतम :—**

**पितोत्सृजेत्पुत्रिकामग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति । संवाद्याभिसन्धिमात्रात्पुत्रिकेत्येकेषाम् ।** इयमाग्नेयी प्राजापत्या चेष्टिः स्मार्त्ताग्नौ तदभावे पूजामात्रपरमिति **हरिहरः** । संवाद्य परिभाष्य । अभिसन्धीत्येतच्चेष्ट्यसंपत्तौ । **ब्रह्मपुराणे :—**

> **अपुत्रेण तु या कन्या मनसा पुत्रवत्कृता ।**
> **राजाग्निबान्धवेभ्यो वा समक्षं वापि कुत्रचित् ॥**
> **आगर्भमथवा शुल्कमुक्त्वा दत्ता वराय या ।**
> **मृते पितरि या दत्ता सा विज्ञेया तु पुत्रिका ॥**

एतेन वा कृता[1] अभिमतीकृता[2] आगर्भे शुल्कमुक्ता[3] स्वयं दत्ता पितुरुपरतावन्येन वा दत्ता[4] इति चतुर्विधा पुत्रिका । इयं एतत्पुत्रः पुत्रिकापुत्रौ । चतुर्विधा पुत्रिका एतस्याः पुत्रश्चेमौ द्वौ पुत्रिकापुत्रावित्यर्थः ।

**शङ्खलिखितौ—**

पुत्रिका हि पुत्रवदिति प्राचेतसः । अस्या अपत्यं पुत्रिकासुतो मातामहपितामहानां पिण्डदः । पुत्रदौहित्रयोर्न विशेषोऽस्त्यनुग्रहे मातामहपितामहानामिति । त्रिकद्वयोपलक्षणम् । इदं च जनकधनग्रहणे इति वक्ष्यते पुत्रदौहित्रयोरौरसपुत्रिकापुत्रयोः । अनुग्रहे नरकोत्तारणादिरूपे ।

**मनु :—**

> **दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।**
> **स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥**
> **मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।**
> **द्वितीयं च पितुस्तस्यास्तृतीयं च पितुः पितुः ॥**

दौहित्रः पुत्रिकापुत्रः प्रकरणात् । पितुर्जनकस्य पित्रे जनकाय एवञ्च जनकानुग्राहकत्वे अस्य तत्पिण्डदत्वमपीत्यर्थः । पितुः पितुरित्यस्यानुषङ्गः । **रत्नाकरा**दयोऽप्येवम् । तेन मातुः पितामहस्येत्यर्थः । एवञ्च मात्रे मातामहाय चेत्यस्य सहजतः पार्वणं जनकधनग्रहणत्वममीभ्यो जनकत्रिकाय चेति शेषः । पितुः स्वजनकजनकस्येत्यर्थः । अस्य मातेव पितैवेति न तस्याः पार्वणानर्हत्वम् ।

तदाह **मनुः**—

**अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।**
**पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम् ॥**

सुतायाः पुत्रत्वेन मातामहस्तया पुत्री भवति नत्वन्यथा । अकृता वचनेनाकृता । अभिसम्बन्धिमात्रात्कृतेत्यर्थः । यदा तु श्वशुरजामात्रोरपत्यार्थतया कन्यादानप्रतिग्रहो तदा षट्पुरुषपार्वणं दद्यादित्याह ।

**यमः**—

**[illegible]र्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।**
**उभयोरर्थसंबन्धः स कुर्यादुभयोरपि ॥**

उभयोर्मातामहादिपित्रादित्रिकयोः । ननु दौहित्रमात्रस्यैव पार्वणाधिकारे कथं तस्य पुत्रिकाकरणमिति चेन्न पुत्रिकाकरणेन दौहित्रस्य पौत्रतया जनकसत्त्वेऽपि मातामहपार्वणस्यैव प्रयोजनादिति । अयञ्च क्षेत्रजापेक्षयोत्तमः । औरसानुत्पत्तौ तत्समः पुत्रिकासुतः इति **याज्ञवल्क्य**वचनात् ।

**आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम् ।**
**तथैकादश[illegible]त्राः स्युः पुत्रिकौरसयोर्विना ॥**

इति वचनाच्चेति । अथ **पौनर्भवः** । तत्र **विष्णुः** ।

**या तु पत्या परित्यक्ता विधवा [illegible]च्छयाथ वा ।**
**उत्पादयत्पुनर्भूत्वा स पौनर्भव उच्यते ।**

पुनर्भूत्वा पूर्वपत्यन्येन स्वं विवाह्य तथा च पतित्यक्ता विधवा पुनर्भूत्वा यं जनयेत्स पौनर्भवः ।

**क[illegible]त्यायनः**—

**क्लीवं विहाय पतितं यत्पुनर्भजते पतिम् ।**

तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥

याज्ञवल्क्यः—

अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।

अथ कानीनः । तत्र वसिष्ठः । कानीनः पञ्चमः या पितृगृहे त्वसंस्कृता कामादुत्पादयेत्स कानीनो मातामहपुत्रो भवतीत्याह । अथाप्युदाहरन्ति ।

अदत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

कामात्स्वाच्छन्द्यात् । तुल्यतः स्वजातीयात् । पुत्री पुत्रवान् । अपुत्रः मातामह-विषयमेतत् । ब्रह्मपुराणे ।

अदत्तायान्तु यो जातः सवर्णेन पितुर्गृहे ।
स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः ॥

अपुत्रपरिणेतृविषयमेतत् । मनुः ।

पितृवेश्मनि कन्या तु यं सुतं जनयेदिह ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥

उभयोरपुत्रत्वे चोभयोरप्यसौ । पारिजातोऽप्येवम । अथ गूढोत्पन्नः । तत्र विष्णुः । गूढोत्पन्नः षष्ठः यस्य तल्पजस्तस्यासौ बीजिनो परिचयान्मातृसजातीय एवासौ । हीनजातीयत पुत्रोत्पन्नशङ्कायान्तु निन्दितः ।

मनुः ।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

अथ सहोढः । तत्र विष्णुः । सहोढः सप्तमः ।

या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥

वोढुरिति विशेषाभिधानान्न बीजिन इत्यर्थः । यद्यपि ।

**पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।**
**नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥**

इत्यादि **मनु** वचनान्न गर्भिण्याः पाणिग्रहणरूपः संस्कार्यः । **अर्य्यमणं देवं कन्याअग्निमयक्षत** इत्यादिसमवेतार्थकश्रुतिविरोधात् । तथापि संस्क्रियत इति पदं तद्भिन्नहोमादिरूपसंस्कारपरमिति **रत्नाकरादयः** । या गर्भिणीत्यादेस्तथा संभोगपूर्वके गान्धर्वविवाहे ।

**गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।**
**कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिके ॥**

इत्यादि**देवल**वचनस्य दर्शनादस्य तद्भिन्नपरत्वमिति **मनु**टीका । **अथ दत्तकः ।** तत्र **विष्णुः ।** दत्तश्चाष्टमः । **मनुः ।**

**माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।**
**सदृशं प्रीतिसंयुक्तौ स ज्ञेयो दत्त्रिमः सुतः ॥**

आपदि पुत्रग्रहीतुः पुत्राभावे । सदृशं वर्णेन । **मेधातिथिस्तु** कुलानुरूपैर्गुणैरित्याह । प्रीतिसंयुक्तौ भयाद्युपाधिरहितौ । **वशिष्ठः । शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः । तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् । न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि च निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव प्रतिगृह्णीयात् । सन्देहे चोत्पन्ने दूरे शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्त्रायत इति ।** तदनुमत्या दानं तदनुमत्यैवापदि विक्रयः भरणासामर्थ्ये त्यागः । पितुर्मातुश्च द्वयोरपि प्रत्येकमपि दानाधिकारः । इयांस्तु विशेषो यत्सति पितरि तदनुज्ञानान्मातुर्दातृत्वमसति तदभावेऽपि । बन्धूनाहूयेति । दत्तकस्यांशप्राप्त्यर्थं स्वदायादान् सन्निधाप्य । अदूरबान्धवं सन्निकृष्टस्वीयमातुलादिकम् । एतत्तदीयनामजात्यादिज्ञापनार्थम् । असन्निकृष्टमेवेत्येवकारोऽप्यर्थः । देयस्य च पुत्रस्य विप्रतिपत्त्यभावोऽवश्यापेक्षणीयः । **विक्रयञ्चैव दानञ्च न नेयाःस्युरनिच्छव** इत्यादिवचनात् । सन्देहे चोत्पन्न इति । कथमपि तस्य ब्राह्मण्यादौ संशये सति तं शूद्रमिव स्थापयेत् । एकेन बहूंस्त्रायत इति । यत इति शेषः । यत एकेन बहूंस्त्रायतेऽतोऽसन्दिग्ध-

जात्यादिकमेव प्रतिगृह्णीयादित्यर्थः। ननु न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरितिविशेषनिषेधात् यथा भर्त्रनुमतौ दानं तथा ग्रहणमपि तथा च होमोऽपि स्त्रीणां स्यात् **हुत्वा गृह्णीया**दितिविधिबलादितिचेत्। न तावत्पत्यनुमतौ ग्रहणमिति शब्दतात्पर्यार्थः तात्पर्यगौरवापत्तेः। अत एव **न योषिद्भ्यःपृथगदद्यादवसानदिनादृते** इति विशेषनिषेधेनापि पृथग्दानं नापि मानान्तरात्। एवं हुत्वेत्यादिश्रुत्या सविधस्यैव ग्रहीतृत्वे व्यवस्थिते श्रुतिविरोधेन मानान्तरादपि तदसिद्धेः। दानन्तु बाधकाभावान्निरपवादमेव। स्त्रीणां तत्तुल्यन्यायतया च शूद्राणां दानाधिकार एव विवृतो न तु ग्रहणाधिकारोऽपोति। अत एवाविद्यतया शूद्रस्यापि ग्रहणेऽनधिकारः। तदुक्तं सिद्धान्ते **स्त्रीशूद्रतिरश्चां यागे नाधिकार इति।** व्यवहारोऽप्येवम्। यत्तु विशेषविधिना स्त्रीणां तुल्यन्यायतया च शूद्राणां ग्रहणाधिकारे सिद्धे तदनुकूलविद्याकल्पनापि रथकारवदिति तन्न। द्वयोः स्वं द्वाभ्यामेव दातुमर्हं साधारणत्वादितिन्यायेन जीवतोऽन्यतरस्यान्यतरकर्तृकदानेऽपेक्षणीयतथा भर्तुरनुज्ञाने दद्यादित्यन्त एव विशेषविधेः कल्पनादिति।

**उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः।**
**स हरेच्चैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः॥**
**गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः।**
**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधाम्॥**

गुणैर्जातिरीत्याचारैः। पुत्रत्वादेव ऋक्थहरत्वे सिद्धे उपपन्नो गुणैरितिवचनं पश्चाज्जातेऽप्यौरसे सगुणदत्त्रिमस्यांशप्राप्त्यर्थं निर्गुणस्य भरणप्राप्त्यर्थं च। गोत्रमार्षेयं काश्यपादि। उत्सर्गतो गोत्ररिक्थानुयायित्वाद्दत्तकस्य पूर्वगोत्ररिक्थत्यागात्तत्पिण्डदानमप्यपैति। स्वधाशब्दः श्राद्धादिपरः। **अथ क्रीतः।** तत्र **विष्णुः। क्रीतश्च नवमः। बौधायनः। मातापित्रोर्हस्तादन्यतरस्य वा योऽपत्यार्थं गृह्यते स क्रीतः। मनुः।**

**क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्**
**स च क्रीतः सुतस्तस्य सदृशोऽसदृशोऽपि वा॥**

सदृशः सवर्णः तदभावेऽसवर्णोऽपीति **पारिजातः।** सदृशासदृशोक्तिस्तु साजात्ये सत्येव गुणापेक्षयेति।

---

१. अधिकरणकौमुद्यां कात्यायनः।
न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता॥ २३ पृष्ठे॥

मेधातिथिरिति **प्रकाशः । स्वयमुपागतः ।** तत्र **विष्णुः ।**

स्वयं चोपागतो दशमः । स यस्योपगतस्तस्येति शेषः ।

**मनुः—**

**मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।**
**आत्मानं दर्शयेद्यस्तु स्वयं दत्तस्तु स स्मृतः ॥**

अकारणात् स्वल्पापराधात् । दर्शयेत् अहं ते पुत्र इत्यन्योऽन्यं दद्यात् । **अथापविद्धः ।** तत्र **विष्णुः ।**

अपविद्धस्त्वेकादशः । स पित्रा मात्रा वा त्यक्तो येन गृहीतस्तस्येति पुत्र इति शेषः ।

**मनुः—**

**मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।**
**यं पुत्रं प्रतिगृह्णीयादपविद्धस्तु स स्मृतः ॥**

उत्सृष्टस्त्यक्तः । त्यागश्चानन्तदुर्गत्या तरणासामर्थ्येन केनचिद्वा स्वल्पदोषयोगेन न तु पतितत्वेन परिग्रहः । पुत्रधिया न तु जीवनाधिवासनया ।

**वशिष्ठः—**

अपविद्धः मातापितृभ्यां त्यक्तं गृह्णीयात्पुत्रत्वेनेति पञ्चमोक्तिरुत्तरषट्परा ।

**अथ कृत्रिमः ।** तत्र **मनुः—**

**सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम् ।**
**पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥**

सदृशं सजातीयं समानगुणं वा । गुणदोषविचक्षणम् । पित्रोरौर्द्ध्वदेहिकाकरणे दोषस्य तत्करणे गुणस्य विवेचकम् । पुत्रगुणैः पितृशुश्रूषादिभिः ।

**बौधायनः—**

सदृशं सकामं यं कुर्यात्स कृत्रिमः ।

सदृशं यथा कर्त्ता पुत्रकरणकामस्तथोद्देश्योऽपि चेत्पुत्रीभवनकामस्तदा सदृशस्तदैव स पुत्रः कार्य इति । **अथ पारसवः ।** तत्र **विष्णुः ।**

यत्र क्वचनोत्पादितस्तद्द्वादशः । यत्र क्वचन ऊढायामनूढायां वा शूद्रायाम् ।

**वशिष्ठः—**

शूद्रा पुत्र एष षष्ठो भवतीत्याहुः । षष्ठत्वन्तूत्तरषट्कापेक्षया ।

**मनुः—**

**यं ब्राह्मणस्तु शूद्रयां कामादुत्पादयेत्सुतम् ।**
**स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः ॥**

पारयन् पितृत्वाभिमतस्य किञ्चिदुपकुर्वन् शवः स्वल्पोपकारत्वान्मृत एव । अथ

**मनुः—**

**क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।**
**पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥**

पुत्रप्रतिनिधीन् । औरसपुत्रिकापुत्रप्रतिनिधीन् । तदभावे तत्कार्य्यकारिणः । क्रिया-लोपादिति अपत्यमुत्पाद्यत इति नित्यविधेरर्थादपत्योत्पादनक्रियानल्लोपप्रसङ्गान् । तल्लोपो (म) भूदित्यतो यथाकथञ्चित्क्रिया निर्वाह्यत इत्यर्थः ।

**बृहस्पतिः—**

**शूद्राः त्रयोदश प्रोक्ता मनुना येन पूर्वशः ।**
**सन्तानकारणन्तेषामौरसः पुत्रिका तथा ॥**

तत्रापि सन्तानकारणत्वेन द्वयोरुत्कृष्टत्वम् । पुत्रत्वन्तु त्रयोदशानामविकल्पमेव पुत्र-त्वेन तेषामपि तत्र तत्र निर्देशात् । मुख्यत्वे सम्भवति गौणस्यान्याय्यात् । पुन्नामनर-कतारणस्य च प्रवृत्तिनिमित्तस्य सर्वत्र सत्त्वादिति ।

## अथ पुत्रित्वातिदेशः ।

**भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।**
**सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥**
**सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।**
**सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥**
**यद्येकजाता बहवो भ्रातरस्तु सहोदराः ।**
**एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥**

**बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।**
**एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥**

अयञ्च पुत्रित्वातिदेशस्तथैवोपसंहारात् । तत्प्रयोजनन्तु पुंसः पुन्नामनरकाप्राप्तिः । स्त्रियाः सपिण्डनार्हत्वमुभयोश्च कृत्रिमाद्यकरणमिति । एवञ्च पुत्रित्वातिदेशात् पुंसा सति सोदरजे स्त्रिया च सति सपत्नीपुत्रेऽपि कृत्रिमादयो नोपादेयाः । एवमेव **सहायोदय-कल्पतरुपारिजातरत्नाकरादयः ।**

ननु च

**अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।**
**पिण्डोदकक्रियाहेतोर्न्नामसंकीर्तनेन वा ॥**

इति वचनेन अपुत्रेण द्वादशविधपुत्ररहितेनेति व्याख्यानदर्शनात् सत्यपि भ्रातृपुत्रे कृत्रिमाद्युपादानमिति चेन्न । पुत्रित्वातिदेशेन पुत्रितुल्यत्वे सिद्धे नापुत्रस्य लोकोऽस्तीति श्रूयते । **अपुत्रास्वनृण** इति **वसिष्ठ**वचनेनास्वर्गित्वमनृणत्वमदनशीलत्वं राक्षसत्वमिति यावत् । तच्च तत् प्रतिपादितम् । अन्यच्च । यदपुत्रत्वप्रयुक्तमनिष्टं तत्सर्वनिषेधस्तावत्सिद्ध एव न तदर्थं पुत्रोत्पादनं नापि पिण्डोदकक्रियार्थम् । तस्यान्यतोऽपि सम्भवात् । नापि नामकीर्त्तनार्थम् । तन्मात्रस्यानुद्देश्यत्वात् । एवञ्च पिण्डोदकेत्यादिवचनमभ्युच्चयपरम् । फलन्तु नित्यविधिपरिपालनमेव । ननु तर्हि तदर्थमेव पुत्रोत्पादनमस्तु पुत्रोत्पादनस्य विध्यर्थत्वादिति चेत् । न । पुत्रित्वातिदेशे निन्दार्थवादे निरस्ते अनिष्टवारणार्थापत्योत्पादनक्रियाया अनवतारात् । एतेन द्वादशपुत्ररहितेन सुतः कार्य इत्यस्य तदन्यतमसत्वे सुतो न कार्य इत्यत्र तात्पर्यम् । अत एव द्वादशविधपुत्रासत्वे भ्रातृजसत्वे पुत्राकरणं **रत्नाकरा**नुमतं संगच्छते । तदयं संक्षेपः । नरकपातपरिहारार्थं तावत्क्षेत्रजाद्युत्पादनम् । स क्वचित्पुत्रित्वातिदेशादेव परिहृतः । क्वचित्तु भ्रातृजादेरभावे क्षेत्रजादिकमुत्पाद्य परिक्रियते । औरसपुत्रिकापुत्रयोस्तु सन्तानकारणत्वेनोपादानम् । न तु क्रियालोपप्रसङ्गभयेन । अत एव भ्रातृजसपत्नीपुत्रयोरपि सत्वे तदुभयोरप्युपादानमिति ।

अथ पुत्रनिरुक्तम् । तत्र **मनुविष्णू ।**

**पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।**
**तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥**

हारीतः—

पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः ।
तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः ॥

बृहस्पतिः—

पुन्नाम्नो नरकात्पुत्रः पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥

मनुवसिष्ठौ—

ऋणमस्मिन् समन्वेति अनृणत्वञ्च विन्दति ।
पिता पुत्रस्य जातस्य पश्येच्चेै जीवतो मुखम् ॥

शङ्खलिखितपैठीनशयः—

यत्र क्वचन जातेन पिता पुत्रेण नन्दति ।
तेन चानृणतामेति पितृणां पिण्डदेन वै ॥

अत्र पूर्वपूर्वपुत्रा समन्वितोत्तरपुत्रिकाधिकारः । उक्तक्रमेणेव तन्निर्द्दिश्य ।

पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ।

इति याज्ञवल्क्यस्वरसात् ।· सकलपुत्राभावे पौत्राधिकारः । तदुक्तं छन्दोगपरिशिष्टे ।

पितामहः पितुः पश्चान्निधनं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् ॥
नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः ।

इति । बृहस्पतिः ।

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः ॥

भृत्यः सवर्ण एवाधिकारी । विष्णुपुराणे ।

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिश्चैव क्रियार्हो नृप जायते ॥

तेषामभावे सर्वेषां समानोदकसन्ततिः ।
मातृपक्षस्य पिण्डेन संबद्धा ये जलेन वा ॥
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृप ।
तत्सर्वान्तर्गतैर्वापि कार्य्या प्रेतस्य सत्क्रिया ॥
उच्छन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ।
पूर्वाः क्रिया मध्यमाश्च तुल्याश्चैवोत्तराः क्रियाः ॥
त्रिविधाश्च क्रिया ह्येतास्तासां भेदान् शृणुष्व मे ।
आदाहाद्वार्य्यायुधादिस्पर्शाद्यन्ताश्च याः क्रियाः ॥
ताः पूर्वाः मध्यमपरास्तास्वेकोद्दिष्टसंज्ञकाः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैश्च समानसलिलैस्तथा ।
तत्सर्वान्तर्गतैर्वापि राज्ञा वा धनहारिणा ॥
पूर्वाः क्रियाश्च कर्त्तव्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्य्या तत्कुलजैस्तथा ॥
मृताहनि तु कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः ।
प्रतिसंवत्सरं राजन्नेकोद्दिष्टं विधानतः ॥

मातृपक्षस्य पिण्डेन संबन्धा मातृसपिण्डाः । जलेन संबन्धो मातृसंबन्धो मातृसमानोदकः । स्त्रीभिरिति **शङ्खब्रह्मपुराण**दर्शनात् । भार्यादुहितृस्नुषाव्यतिरिक्तस्त्रीपरम् । तत्सर्वान्तर्गतैरिति । स च ब्राह्मणादीनामन्यतमे मृते तदन्तर्गतैरेव क्रिया कार्येत्यर्थः । उच्छन्नेति । उच्छन्नबन्धोर्मृतस्य प्रेतोचितक्रिया ऋक्थं दत्वा प्रभुणा कारयितव्येत्यर्थः । अन्त्या इति शरीरस्यान्ते भवा अशौचमध्यकर्तव्यदशाहादारभ्य जलादिस्पर्शान्ता । अन्त्या मासि मासीति षोडशश्राद्धोपलक्षणम् । पितृमातृ इति पितृमातृसपिण्डादयस्तु पूर्वक्रियां कुर्युरेव । उत्तरक्रियाञ्चैव कुर्युः । मध्यमक्रियायान्तु तेषामनियमः । उत्तरक्रियायान्तु पुत्राद्या भ्रातृसन्ततिपर्यन्ताः । दौहित्रास्तु कुलजाश्च नियताः । अत्रापि पार्वणे कृत्रिमजाः पुत्राः । यावद्वचनं हि वाचनिकमिति

न्यायेन तस्य पुत्रकर्तृत्वेऽपि निरूपिते पौत्रत्वाभावादेवात्र पौत्रप्रपौत्रदौहित्रा एवाधिकारिणः । मृताहनीत्युपलक्षणम् । तेनान्वष्टकावृद्धिश्राद्धयोरपि संग्रहः । तदाह **शंखः—**

**अन्वष्टका तथा वृद्धिश्राद्धं चैव मृताहनि ।**
**एकोद्दिष्टं तथा त्यक्त्वा त्रिषु नान्यत्पृथग् भवेत् ॥**

मातृश्राद्धं वृद्धिश्राद्धम् ।

**ब्रह्मपुराणे ।**

**न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैः ।**
**असमाप्ते तु तस्यापि कर्त्तव्यं ब्रह्मचारिणः ॥**
**निरन्वये सपिण्डे तु मृते सति दयान्वितः ।**
**तदशौचं गुरुश्चीर्त्वा कुर्य्यात्तत्पितृवत्क्रिया ॥**

पितृवदिति । यथा पिता कुर्यात्तथा गुरुरपि मद्यः कुर्यादित्यर्थः ।

**त्रयाणामाश्रमाणाञ्च कुर्याद्दाहादिकाः क्रियाः ।**
**यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः ॥**
**गुरुः करोति शिष्याणां पिण्डनिर्वपनं सदा ।**
**कृत्वा तु पैतृकं शौचं स्वजातिविहितं च यत् ॥**
**भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते ।**
**तस्य भ्रातृसुतः कुर्याद्यस्य नास्ति सहोदरः ॥**
**दत्तानां वाप्यदत्तानां कन्यानां कुरुते पिता ।**
**चतुर्थेऽहनि तास्तेषां कुर्वीरन्सुसमाहिताः ॥**
**मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे ।**
**तेऽपि तेषां प्रकुर्वन्ति तृतीयेहनि सर्वदा ॥**
**जामातुः श्वशुराश्चक्रुस्तेषां तेऽपि च संयुताः ।**
**मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा ॥**
**भागिनेयसुतानाञ्च सर्वेषां त्वपरेऽहनि ।**
**श्राद्धं कार्यं तु प्रथमं स्नात्वा कृत्वा** जलाञ्जलिः **॥**

मृते राज्यसपिण्डेऽपि निरपत्ये पुरोहितः ।
मन्त्री वा तदशौचन्तु नीत्वा पश्चात्करोति सः ॥
ब्राह्मणास्त्वन्यवर्णानां न करोति कदाचन ।
कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितां व्रजेत् ।
मन्त्रान्कुर्वन्ति विप्राय क्षत्रविट्शूद्रयोनयः ॥
सदा दशभ्यः पुत्रेभ्यो न करोति कदाचन ।
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते ॥

सगोत्राय विद्यते गोत्रं यस्य स तथा । तेन विद्यमानगोत्रस्यासगोत्रैर्न्न श्राद्धं कार्य्यम् । यतेरिति दाहादिसपिण्डीकरणान्तप्रेतपिण्डक्रियाविषयम् । तथाच **भारते** ।

न दग्धव्यो न दग्धव्यो विदुरोऽयं कदाचन ।
ज्ञानाग्निदग्धदेहस्य पुनर्दाहो न विद्यते ॥

स्वजातिविहितमशौचान्ते जलादिस्पर्शादि । महोदर इति महोदरग्रहणात् विमातृत्वेऽपि भ्रातृपुत्रस्यैवाधिकारः । न च तस्य भ्रातृत्वाद्वैपरीत्यम् । भ्रातृपदस्य सहोदर एव शक्तेः । वैमात्रेयादौ गौणत्वात् गुणश्च वाजिपुरुषापेक्षया समानसंख्यं जन्यजनकत्वमिति दत्तानां पतिपुत्ररहितानामिति द्रष्टव्यम् । इह पौत्रः प्रपौत्र इति यथाक्रमनिर्द्देशात् पौत्राभावे प्रपौत्राधिकारः । स्त्रीभिरिति । यथाविध्यपरिणीतस्त्रीपरम् । तेन भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते इत्यनेनाविरोधः । अत एव सर्वाभावे स्त्रियः कुर्य्युः स्वभर्तृणाममन्त्रकमिति **मार्कण्डेयपुराण**वचनमपि यथाविध्यपरिणीतस्त्रीपरमेव । केचित्तु ।

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रियाः ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः ॥
भार्यापिण्डं पतिर्दद्यात् पत्ये भार्या तथैव च ।
श्वश्र्वादेस्तु स्नुषा चैव तदभावे सपिण्डकः ॥

इति**शङ्ख**वचनात् । पुत्राभाव एव पत्न्यधिकारमाहुस्तन्न पूर्वलिखित**शङ्खलिखितछन्दोगपरिशिष्ट**वचनेन विशेषविषयतया शीघ्रप्रवृत्तेन श्राद्धसामान्य

विषयात् स्वस्ववाक्याद्बलीयसा प्रथमं षोडशश्राद्धे पुत्राधिकारबोधनात्। पुत्राभावे पुत्रपौत्राभाव इत्यर्थः। श्वश्रा इति। आदिपदात् श्वशुरपरिग्रहः। तेनैतद्वचनबलादेव भ्रातृसत्वे पत्न्याः पतिश्राद्धे सपिण्डसत्वे च श्वशुरश्राद्धे स्नुषाया अधिकारः। स्नुषाश्राद्धे श्वश्र्वधिकार इति तु केचित्। तन्न। एतच्च तस्यान्योऽन्याधिकारबोधकत्वात्। तथैव चेत्यस्य प्रकारमात्रार्थत्वात् समुच्चयार्थत्वेऽपि पूर्वत्रैवान्वयात्। **पारिजातादि**-स्वरसोऽप्येवम्। ननु सामान्यविशेषन्यायात् पौत्रस्यास्तु पत्न्यपेक्षया प्रथमाधिकारः प्रपौत्रस्य कथं स्यात्। तत्र पौत्रवद्विशेषवचनाभावादिति उच्यते। पुत्रः पौत्रः प्रपौत्रो वेति क्रमनिर्देशात्पौत्रस्याधिकारे सिद्धे पुत्राद्यैरेव चोत्तरा इति विशेषवचनेन तस्यां क्रियायां प्रपौत्राधिकारे प्राप्ते जीवत्पत्नीकस्य श्राद्धान्तरेऽपि प्रपौत्रस्याधिकारः। एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापि तथेति न्यायात् प्रपौत्राभावे च पत्नी स्यादित्यस्यापवादकाभावात्। स्त्रियास्तु द्विराचमनमात्रं न त्वपसव्यमिनीति तथैव छन्दोगपारकृत्ये **प्रतिहस्तक**-लिखनात्। पत्न्यभावे **बृहस्पतिः**—

> अङ्गादङ्गात्समुद्भवति पुत्रवद्दुहिता समा।
> तस्यामात्मनि जीवन्त्यां कोऽनपत्यधनं हरेत्॥

**विष्णुः**—

> यश्चांशहरः स पिण्डदायी स्मृतः। यो यस्य स्वमाददाति स तस्य श्राद्धं कुर्यात्। पिण्डश्च त्रिपुरुषं कुर्यात्।

**ऋष्यशृङ्गः**—

> पुत्रेषु विद्यमानेषु नान्यो वै कारयेत्स्वधाम्।
> अपुत्रस्य च या पुत्री सापि पिण्डप्रदा भवेत्॥
> तस्या पिण्डान् दशैतान्वा एकाह्नैव निर्वपेत्।
> नद्यां समुद्रगामिन्यां तांश्च पिण्डान्विनिक्षिपेत्॥

दशैतान्वेति वाकारः पूर्वलिखित**ब्रह्मपुराणो**क्तचतुर्थदिनापेक्षया व्यवस्थितविकल्पार्थः। तेन कृतचूडाकरणकन्यावाग्दानोत्तरकालश्च त्रिरात्रेणेति व्यवस्था। समुद्रगामिन्यामिति प्रशंसा, तेन जलप्रक्षेपो न विरुद्धः।

**भारते**—

> दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता।
> अशौचमुदकं पिण्डमेकोद्दिष्टं तयोरपि॥

संस्कृतेति। एवञ्चाविवाहितायाः सुतरामधिकारः पितृगोत्रत्वात् एवञ्च पत्न्यभावे दुहितुरधिकारः तदभावे सहोदरस्येति **श्राद्धप्रदीपः। पारिजातादिमते** तु पत्न्यभावे सहोदरस्याधिकारः। तदुक्तं **ब्रह्मपुराणे—**

**भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते।**
**तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः॥**

इति सहोदरस्यापि कनिष्ठास्याधिकारः। न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः इति **छन्दोगपरि**शिष्टात्। यद्यप्यनेन ज्येष्ठभ्रातुरधिकारो निरस्यत एव तथापि।

**पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च।**
**एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः॥**

इति **प्रचेतो**वचनेन ज्येष्ठभ्रातुश्चाधिकारविधानात् तयोरप्यधिकारः। सहोदराभावे तत्पुत्रस्याधिकारः। पूर्वलिखित**ब्रह्मपुराणात्**। तदभावे तु पितुर्निरपत्रादः **प्रचेतो**वचनात्। तदभावे स्नुषायास्तदभावे वैमात्रेयादेः सन्निहितस्य तदभावे व्यवहितस्य सपिण्डस्य तदभावे मातृसपिण्डस्य तदभावे मातृसमानोदकस्य तदभावे सपत्नी दुहितृस्नुषाव्यतिरिक्तानां मात्रादीनां सन्निहितानां स्त्रीणां तदभावे दौहित्रस्य तदभावे पितृमातुलस्य तदभावे जामातृश्वशुरयोः परस्परम्। यत्र यत्र च न शाब्दक्रमस्तत्र संबन्धोत्कर्षादेव तु क्रमोऽत्रसेयः। एतदभावे ऋत्विगादेरधिकारस्तत्राप्यत एव क्रम ऊह्यः।

**अथ स्त्रीश्राद्धाधिकारिणः॥** तत्रोढायाः स्त्रियाः सर्वासु क्रियासु पुत्रस्तदभावे पतिस्तदभावे सपत्नीपुत्रोऽधिकारी। ननु बह्वीनामेकपत्नीनामित्यादिना सपत्नीपुत्रे पुत्रत्वातिदेशात्तदभावे पत्युरधिकारः। पुत्रे सत्यन्येषामधिकारनिषेधादिति चेन्न। भार्यापिण्डं पतिर्दद्यादित्यस्य विशेषविषयत्वेन शीघ्रप्रवृत्तिकतया वाक्यस्यास्य सामान्यविषयत्वेन विलंबितप्रवृत्तिकतया पत्यभावविषयकत्वात्। वस्तुतस्तु सपत्नीपुत्रे पुत्रत्वं नातिदिश्यते तथाश्रवणात्। किन्तु सपत्नीमातरि पुत्रिणीत्वं तत्प्रयोजनं तु सपिण्डनत्वार्हत्वादि। अथ तेन पुत्रेण पुत्रिण्य इत्यभिधानात्तस्य पुत्रत्वमतिदेशादेव वाच्यं तासां पुत्रिणीत्वमप्यतिदिशतीति चेत्। न। तस्य पुत्रत्वातिदेशादेव कृतकृत्यत्वे तासां पुत्रिणीत्वातिदेशस्य निरर्थकत्वेनानारभ्यत्वापत्तेः। अत एव तस्य पुत्रत्वमतिदिश्य तासां पुत्रिणीत्वमप्युपदिशतीत्यपास्तम्। अतिदेशोपदेशरूपार्थभेदेन वाक्यभेदापत्तेश्च। न च तेन पुत्रेणेति पुत्रित्वातिदेशः। पुत्रिण्य इति संबन्धमात्रमिति

संबन्धस्य प्रमाणान्तरसिद्धतया विधानायोगात्। अन्यतः प्र...शास्त्रारम्भणात्। तस्मा-
द्यथामुकेन धनेन धनीत्यत्र द्वाभ्यामपि धनशब्दाभ्यामेकस्मिन्नेव धनेऽभिहिते तद्धन-
शब्दो वाक्यार्थस्तथा तेन पुत्रेण पुत्रिण्य इत्यत्रापि द्वाभ्यां पुत्रशब्दाभ्यामुपस्थापितस्य
सपत्नीपुत्रस्य जनकत्वलक्षणसंबन्धो वाक्यार्थः। स च तदजननन्यां तस्यां बाधित
इति तदतिदेशोऽयमिति सूक्तं तत्सत्त्वे पत्यधिकार इति तदभावे स्नुषायास्तदभावे स-
पण्डिस्य तदभावे समानोदकस्येति अनुमेयात्र पूर्वैव क्रिया तत्र पितुरधिकार इति।

## अथानधिकारिणः।

तत्र विष्णुः—

न ब्रह्मचारिणः कुर्युरुदकं पतिता न च।
पाखण्डाश्रितास्तेना न व्रात्या न विकर्मिणः॥
गर्भभर्त्तृद्रुहश्चैव सुराप्यश्चैव योषितः।

स्तेना हिरण्यमात्रापहर्त्तारः। सुराप्य इति त्रैवर्णिकमात्रपरमिति सर्वं चतुरस्रम्।

इतिमहामहोपाध्यायसन्मिश्रवाचस्पतिविरचितः श्राद्धचिन्तामणिः सम्पूर्णः॥
सं० १९४८ फा० शु० १४ श-देना० श० लि० श्रीहरिः।

# APPENDIX II.

( A )

## *ACT. NO. II OF 1929.*

Hindu Law of Inheritance (Amendment) Act, 1929.

*(Received the assent of the Governor General on the 21st February 1929.)*

An act to alter the order in which certain heirs of a Hindu male dying intestate are entitled to succeed to his estate.

WHEREAS it is expedient to alter the order in which certain heirs of a Hindu male dying intestate are entitled to succeed to his estate ; It is hereby enacted as follows :—

Short title, extent and application.

1. (1) This Act may be called the Hindu Law of Inheritance (Amendment) Act, 1929.

(2) It extends to the whole of British India, including British Baluchistan and the Southal Parganas, but it applies only to persons who, but for the passing of this Act, would have been subject to the law of Mitākṣharā in respect of the provisions herein enacted, and it applies to such persons in respect only of the property of males not held in coparcenary and not disposed of by will.

Order of succession of certain heirs.

2. A son's daughter, daughter's daughter, sister and sister's son shall, in the order so specified, be entitled to rank in the order of succession next after a father's father and before a father's brother :

Provided that a sister's son shall not include a son adopted after the sister's death.

Savings.

3. Nothing in this Act shall—

(a) affect any special family or local custom having the force of law, or

(b) vest in a son's daughter, daughter's daughter or sister an estate larger than, or different in kind from, that possessed by a female in property inherited by her from a male according to the school of Mitākṣharā law by which the male was governed, or

(c) enable more than one person to succeed by inheritance to the estate of a deceased Hindu male which by a customary or other rule of succession descends to a single heir.

( B )

## ARYA MARRIAGE VALIDATION ACT, (XIX OF 1937).

Received the assent of the Governor-General on 14-4-1937. Printed and published in the Gazette of India, Part IV, page 39, dated 17-4-1937.

Whereas it is expedient to recognise and place beyond doubt the validity of inter-marriages of a class of Hindus known as Arya Samajists ; It is hereby enacted as follows :—

Short Title and Extent.

1. (1) This Act may be called the Arya Marriage validation Act, 1937.

(2) It extends to the whole of British India including British Baluchistan and the Sonthal Parganas, and applies also to all subjects of His Majesty within other parts of India, and to all Indian subjects of His Majesty without and beyond British India.

Marriage between Arya Samajists not to be invalid.

2. Notwithstanding any provision of Hindu law, usage or custom to the contrary no marriage contracted whether before or after the commencement of this Act between two persons being at the time of the marriage Arya Samajists shall be invalid or shall be deemed ever to have been invalid by reason only of the

